**गोजातीयोऽर्थो गोशब्दस्य वाच्यो गोजातीयश्च शब्दो गोजातीयस्य वाचक इत्येवंरूपस्तर्कस्समुल्लसति । क्वचिच्चाप्तपुरुषप्रयुक्तेन परार्थतर्करूपेणेदृशोऽर्थ ईदृशशब्दवाच्य ईदृशशब्दश्चेदृशार्थस्य वाचक इति वाक्येन वाच्यवाचकभावप्रतिपत्तिः । तर्के चानुभवस्मृतिः प्रत्यभिज्ञानश्च कारणम् । इति तर्कनिरूपणम् ॥** 5

**वाच्यवाचकेति** । आवापोद्वापाभ्यामिति, आवापोऽनुवृत्तिरुद्वापो व्यावृत्तिः । तत्प्रकारं विशदयति यथेति, अयमभिप्रायः, एकः प्रयोजकवृद्धो य आज्ञापयति कमपि, द्वितीयः प्रयोज्यवृद्धो य आज्ञप्तो भवति, तृतीयो बालो यः प्रयोज्यवृद्धप्रवृत्तितः प्रयोजकवृद्धोदितस्य वाक्यस्यार्थं परिच्छिनत्ति । तत्र प्रयोजकवृद्धेन प्रयोज्यवृद्धं प्रति गामानयेति वाक्ये प्रयुक्ते गृहीततत्सङ्केतस्य प्रयोज्यवृद्धस्य तच्छ्रोतुरगृहीततत्सङ्केतस्य च बालस्य वर्णविषयकं पदविषयकं 10 वाक्यविषयकञ्च सङ्कलनात्मकं प्रत्यभिज्ञानं समुदेति । यथा पूर्वपूर्ववर्णावयवश्रवणेन संजातसंस्कारस्यान्त्यावयवश्रवणानन्तरं पूर्वतदवयवस्मरणे ह्रस्वादिविषयकसङ्केतस्मरणे च सत्ययं वर्णो ह्रस्वो दीर्घः प्लुतो वेति प्रत्यभिज्ञानमुभयोर्जायते तथा पूर्वपूर्ववर्णश्रवणजन्यसंस्कारस्यान्त्यवर्णश्रवणानन्तरं तत्तत्पूर्ववर्णानामनुक्रमविशिष्टानां स्मरणे पदविषयकसङ्केतस्मरणे च सतीदं सुबन्तं तिङन्तं वा पदमिति प्रत्यभिज्ञानं जायते । एवं पूर्वपूर्वपदश्रवणसमुदितसं- 15 स्कारस्यान्त्यपदश्रवणानन्तरमनुक्रमविशिष्टानां पूर्वपदानां वाक्यविषयकसंकेतस्य च स्मरणे सति वाक्यमिदमिति प्रत्यभिज्ञानं जायते । इत्थं प्रत्यभिज्ञानाद्वर्णपदवाक्यग्रहणे जाते प्रयोज्यवृद्धस्य गोकर्मकानयनानुकूलां गमनात्मिकां चेष्टामाकलय्य बालः कारणान्तरासन्निधौ प्रयोजकवृद्धप्रयुक्तशब्दश्रवणसमनन्तरं प्रवृत्तस्य प्रयोज्यवृद्धस्येयं चेष्टा प्रयोजकवृद्धशब्दजन्ययत्किञ्चित्प्रतिपत्तिप्रयोज्येति मन्यते । ततस्तेनानीयमानां गां निभाल्य गवानयनरूपोऽर्थोऽ- 20 नेन प्रयोज्यवृद्धेन तस्माद्वाक्यादवगत इति प्रत्येति, परन्तु न पारयति तदानीं कस्य पदस्य कोऽर्थ इति विविच्य निश्चेतुं । पुनश्च कालान्तरे प्रयोजकवृद्धेन प्रयुक्तं गां नयेत्यादिवाक्यं गोशब्देनानुवृत्तमानयशब्देन च व्यावृत्तं श्रुत्वा दृष्ट्वा च प्रयोज्यवृद्धस्य विशिष्टां प्रवृत्तिं विजानाति तदाऽर्थस्य गोरनुवृत्तिं व्यावृत्तिञ्चानयनस्य, तथैव प्रयोजकवृद्धेनोदितमश्वमानयेति वाक्यं गोशब्देन व्यावृत्तमानयशब्देन चानुवृत्तं निशम्य विलोक्य 25 च प्रयोज्यवृद्धस्य तादृशीं चेष्टां समाकलयति गवादेरर्थस्य व्यावृत्तिमानयनस्यानुवृत्तिञ्च । ततश्चेदृशावापोद्वापाभ्यां समुल्लसति तस्य तर्कः गोजातीयोऽर्थो गोजातीयशब्दवाच्यो गोजातीयश्च शब्दो गोजातीयस्य वाचक इत्येवंरूपो वाच्यवाचकभावावलम्बन इति ।

गामानयेतिवाक्येति, गामानयेत्यनुकरणं पदं तद्बोधकञ्चेतिपदं, तस्य च वाक्यपदेन 'सह सुपा' इत्यनेन समासः । एवमग्रेऽपि । तत्र प्रयुक्तपदस्य वाक्यपदेन समनन्तर-पदस्य प्रवृत्तिपदेन अन्यपदस्यानुमानज्ञानपदेनान्वयः । प्रेक्षणं बालनिष्ठं, अवशिष्टं मूलं स्फु-टार्थम् । नन्वावापोद्वापाभ्यां क्वचिदेव तर्कस्समुल्लसतीत्युक्तं तत्किमन्येनापि प्रकारेण स
5 समुदेतीति जिज्ञासायामाह क्वचिच्चेति । अत्रायं भावः, कश्चिदाप्तस्स्वयं तर्केण वाच्यवाचक-भावं शब्दार्थयोरवगत्य परं प्रति बोधयितुं परस्मिन्स्तदनुसारितर्कोत्पत्तिहेतुं परार्थतर्कमभि-धत्ते, वत्स ! गोजातीयोऽर्थो गोजातीयशब्दवाच्यो गोजातीयश्च शब्दो गोजातीयार्थस्य वाचक इत्यवेहीति, ततश्चासौ वाच्यवाचकयोरुपलम्भानुपलम्भद्वारेण तथाप्रतिपद्यमानस्तर्का-देव वाच्यवाचकभावं विजानाति, इयञ्च व्याप्त्या वाच्यवाचकभावप्रतीतिर्बोध्या, शृङ्गग्राहि-
10 कतया तु नियतव्यक्त्यावयं पुरोवर्त्ती भावोऽस्य शब्दस्य वाच्य इति, तथाऽऽगमादेरपि मा भवति, तदूर्ध्वं तु व्याप्तिद्वारेण तर्कादेव प्रत्येति, इत्थम्भूतसर्व इत्थम्भूतस्य सर्वस्य शब्दस्य वाच्य इत्थम्भूतशब्द इत्थम्भूतस्य सर्वस्यार्थस्य वाचक इति ॥ ननु वाच्यवाचकभाव-विषयके तर्केऽपि व्याप्तिज्ञानात्मकतर्क इवानुभवस्मृत्योः क्वचिदेव कारणत्वं किं वा सर्वत्रेत्यत्राह तर्के चेति, वाच्यवाचकभावविषयकेत्यादिः, अन्यथा साक्षादेव जायत
15 इत्यनेन विरोधापत्तेः, कारणमिति, तथा चात्र तयोः कारणत्वं नियतमिति भावः । अथ तर्कं निगमयतीतीति ॥

इति श्रीमद्विजयानन्दसूरीश्वरपट्टालंकारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्य-स्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाक-रस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायामनुमानपरिकरो नाम तृतीयः किरणः ॥

20
## अथ चतुर्थः किरणः ॥

अथानुक्रमायातमेतेषां कार्यभूतमनुमानं स्वरूपयति—

**हेतुज्ञानव्याप्तिस्मरणकारणकं साध्यविज्ञानमनुमानम् । यथा पर्वतो वह्निमानिति विज्ञानम् ॥**

**हेतुज्ञानेति** । हेतोर्वक्ष्यमाणस्वरूपस्य ज्ञानं निश्चयः, व्याप्तेरविनाभावरूपायास्स्मरणं
25 ते कारणं यस्य तथाभूतं साध्यस्याभिधास्यमानस्वरूपस्य विज्ञानं निश्चयोऽनुमानमित्यर्थः । अत्र हेतुज्ञानं व्याप्तिस्मरणञ्च मिलित्वाऽनुमितौ कारणमन्यथा विस्मृतव्याप्तेरनधिगतव्या-प्तेर्वाऽत्रस्थमनुष्यस्य नारिकेलद्वीपवासिनो वा हेतुज्ञानमात्रात्तदभाववतो वा व्याप्तिस्मरण-

वतोऽनुमानोत्पत्तिस्स्यात् । एवं ज्ञानद्वयादेव सर्वत्रानुमानोत्पत्त्या निरुक्तज्ञानद्वयजन्यातिरिक्तपरामर्शात्मकविशिष्टज्ञानस्यानुमानहेतुत्वमप्रामाणिकमेवेति बोध्यम्, तथाकल्पने गौरवात् प्रयोजनाभावाच्च । अनुमानं दृष्टान्तयति यथेति, गृहीतधूमस्य स्मृतव्याप्तिकस्य च यत्पर्वतो वह्निमानिति विज्ञानमुदेति तदनुमानमिति भावः ॥

इदानीमनुमानलक्षणघटकहेतुलक्षणमाह— 5

**निश्चितव्याप्तिमान् हेतुः । यथा वह्नौ साध्ये धूमः । व्याप्तिमत्त्वमेव हेतो रूपं न तु पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वात्मकं त्रिरूपं, अबाधितत्वासत्प्रतिपक्षितत्वाभ्यां पञ्चरूपं वा, असाधारणत्वाभावात् ॥**

निश्चितेति । निश्चिता निर्णीता चासौ व्याप्तिश्च निश्चितव्याप्तिस्ततो नित्ययोगे मतुब् अत एव निश्चिता व्याप्तिर्यस्मिन्निति बहुव्रीहिर्न कृतः, निश्चयविषयव्याप्तेर्नित्यसम्बन्धस्य कर्मधारयोत्तरमतुबन्तेनैव लाभात् । एवञ्च निश्चितव्याप्त्या नित्यसम्बद्धो हेतुरिति भावः । 10
हेतुं दृष्टान्तयति यथेति । ननु हेतुर्निश्चितपक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपत्रययुक्त एव, तत्र पक्षसत्त्वं ह्यसिद्धत्वव्यवच्छेदार्थं सपक्षसत्त्वं विरुद्धत्वव्यवच्छेदार्थं विपक्षासत्त्वञ्चानैकान्तिकत्वव्यवच्छेदार्थं निश्चीयते तेषामनिश्चये तु असिद्धादिहेतोरप्यनुमानापत्तिः प्रसज्येतेत्याशङ्कायामाह व्याप्तिमत्त्वमेवेति, एवशब्देन व्यवच्छेद्यमाह नत्विति । त्रिरूपमिति बौद्धानामेवमभ्युपगमः । नैयायिकास्तु बाधितसत्प्रतिपक्षितहेतुव्युदासायाबाधितत्वासत्प्रतिपक्षाभ्यां प्रोक्तत्रिरूपं हेतो रूपमिति वदन्ति तदपि नेत्याहाबाधितत्वेति । 15
अनयोर्हेतुरूपत्वाभावे कारणमाहासाधारणत्वाभावादिति । अविनाभावनियमनिश्चयादेव दोषत्रयादिपरिहारोपपत्तेरविनाभाव एव हेतोरसाधारणं रूपं, स चासिद्धे विरुद्धेऽनैकान्तिके वा न सम्भवति, तदभावाच्च त्रिरूपे विद्यमानेऽपि हेतोर्गमकत्वं न दृष्टं, यथा स श्यामो मैत्रातनयत्वादितरमैत्रापुत्रवदित्यादौ । न च नैयत्येन विपक्षव्यावृत्तिर्नास्तीति वाच्यम्, 20
विपक्षान्नियमेन व्यावृत्तेरेव व्याप्तित्वेनेतररूपद्वयवैयर्थ्यापत्तेः । पक्षधर्मत्वाभावेऽपि उदेष्यति शकटं कृत्तिकोदयात्, उपरि सविता भूमेरालोकवत्त्वात् अस्ति नभश्चन्द्रो जलचन्द्रा-

१. नैयायिकानां मतेऽपि हेतुज्ञानसम्बन्धज्ञानयोरावश्यकत्वमेव, साध्यव्याप्यहेतुमत्ताज्ञानरूपपरामर्शात्मकविशिष्टज्ञानं प्रति विशेषणज्ञानमुद्रया तयोः कारणत्वात्, तथा च ताभ्यामेवानुमित्युत्पत्त्या व्यर्थः परामर्श इति भावः ॥ २. अयम्भावः व्याप्तिरेव केवलं हेतोः स्वरूपं, सत्त्वासत्त्वे तु तद्धर्मौ, न हि धर्मिसत्त्वे धर्मास्सदा सर्वे भवन्त्येवेति नियमः, पटादेः शुक्लत्वादिधर्मैर्व्यभिचारात् यद्यपि सत्त्वासत्त्वधर्मौ क्वचिद्धेतौ तथापि धर्मिस्वरूपा व्याप्तिर्भविष्यतीति न विरोधः । यत्रापि च धूमादौ सत्त्वासत्त्वे हेतौ दृश्येते तत्रापि व्याप्तेरेव प्राधान्यमतस्सत्त्वासत्त्वादिकं साधारणमिति ॥

दित्याद्यनुमानदर्शनात् । तत्रापि कथञ्चित्कालाकाशादीनां पक्षत्वकल्पने काककार्ष्ण्येन हेतुना प्रासादधावल्यस्यापि साध्यत्वप्रसङ्गस्स्यात्तत्रापि कथञ्चिज्जगतः पक्षत्वसम्भवात् । जगत् प्रासादधावल्ययोगि, काककार्ष्ण्ययोगित्वादिति । जगतः पक्षत्वस्य लोकविरुद्धत्वे कालाकाशादीनामननुभूयमानत्वेन लोकविरुद्धत्वं तुल्यमेव, क्लिष्टकल्पनापत्तिश्च । नापि सपक्षसत्त्वं गमकं, सपक्षेऽसतोऽपि श्रावणत्वादेश्शब्दानित्यत्वे गमकत्वप्रतीतेः । न च श्रावणत्वस्यासाधारणत्वादनैकान्तिकत्वमिति वाच्यम्, यद्यदसाधारणं तत्तदनैकान्तिकमिति व्याप्त्यसिद्धेः सपक्षविपक्षासत्त्वेन निश्चितेऽपि श्रावणत्वे पक्षान्तर्भावेणाविनाभावग्रहसम्भवात् । अन्यथा सर्वानित्यत्वे साध्ये सत्त्वादेर्हेतुत्वं तव न स्यात् । नापि सपक्षविपक्षयोरसत्त्वेन संशयितत्वादसाधारणः, श्रावणत्वादेस्तदसत्त्वेनैव निश्चयात् । तस्मान्निश्चितान्यथानुपपत्तिरेव हेतो रूपं तच्चासिद्धादिहेतौ न सम्भवत्येवेति किं त्रिरूपेण । एवं पञ्चरूपत्वमपि न हेतुलक्षणं, अग्निजन्योऽयं धूमस्सत्त्वात्पूर्वोपलब्धधूमवदित्यादौ पक्षे धूमे हेतोस्सत्त्वस्य सपक्षे पूर्वदृष्टधूमे च सत्त्वात् खरविषाणादौ विपक्षेऽसत्त्वात् पक्षे बाधाभावात्साध्याभावसाधकानुमानासम्भवाच्च पञ्चरूपत्वेऽक्षतेऽप्यगमकत्वात्, न च यावद्विपक्षावृत्तित्वं हेतोर्नास्तीति वाच्यम्, तस्यैवान्यथानुपपत्तिरूपत्वेन हेतुलक्षणत्वे शेषाणामकिञ्चित्करत्वात् । एवमबाधितविषयत्वं निश्चितमेव हेतुलक्षणमिष्टं भवतस्तन्निश्चयश्च न सम्भवति, तन्निश्चयसाध्यनिश्चययोरन्योऽन्याश्रयात् । सति हि हेतौ बाधितविषयत्वाभावनिश्चये साध्यनिश्चयस्तन्निश्चये च बाधितविषयत्वाभावनिश्चय इति, न च प्रमाणान्तरेण बाधितविषयत्वाभावनिश्चयान्नान्योऽन्याश्रय इति वाच्यम्, तस्याकिञ्चित्करत्वात्, कुतश्चिद्बाधनाभावनिश्चये कुतश्चित्साध्याभावस्यापि सद्भावसम्भवात् । नन्वविनाभावोऽपि हेतुलक्षणं माभूत् अन्योऽन्याश्रयात्, साध्यसद्भावनिश्चये व्याप्तिनिश्चयात् तन्निश्चये च साध्यनिश्चयादिति मैवम् व्याप्तिनिश्चये साध्यनिश्चयस्याप्रयोजकत्वात् तर्काख्यप्रमाणान्तरादेव तन्निश्चयात् । न च हेतावविनाभावनिश्चायकेन तर्केणैव साध्यस्यापि सिद्धेर्हेतोरकिञ्चित्करत्वं स्यादिति वाच्यम्, हेतुना देशादिविशेषावच्छिन्नस्य साध्यस्य साधनात् तर्कात्तु सामान्यत एव सिद्धत्वात् । एवमसत्प्रतिप-

१. शब्देऽनित्यत्वसद्भाव एव श्रावणत्वोपपत्तिरूपतथोपपत्तिसम्भवादिति भावः ॥ २. सत्त्वस्य विपक्षावृत्तित्वेन निश्चितत्वेऽपि सपक्षावृत्तित्वनिश्चयतो गमकत्वं सत्त्वस्य न स्यात् न च तत्र सपक्ष एव नास्ति इति वाच्यम्, विद्यमाने सपक्षे हेतोरवृत्तित्वनिश्चयस्य गमकतायामनङ्गत्वादिति तात्पर्यम् ॥ ३. तर्केण व्याप्तिग्रहणवेलायां हि न पर्वतादीनां भानं सर्वत्रानुवृत्त्यभावात् । तर्ह्यनुमितौ पक्षः कथं भासत इति चेत् हेतुग्रहणाधिकरणतया क्वचित्तद्भानम् । हेतोर्हि ग्रहः पर्वतादौ जातोऽतस्साध्यस्यापि तत्रैवेति तद्भानम् । क्वचिदन्यथाऽनुपपत्त्यवच्छेदकतया, अस्ति नभसि चन्द्रो जलचन्द्रादित्यादौ नभसि हेतोरग्रहेऽपि नभसि चन्द्रास्तित्वं विना जलचन्द्रानुपपत्तेरन्यथानुपपत्त्यवच्छेदकतया नभसो भानमिति ॥

क्षितहेतोरपि न हेतुलक्षणत्वं उभयत्र हेतावविनाभावासम्भवात् तस्स्थितमेतन्निश्चितव्याप्ति-
मत्त्वमेव हेतोरसाधारणं रूपं न तु त्रिरूपं पञ्चरूपं वेति ॥ अत्रेदं विचार्यम्, अविनाभावः
किं सामान्यस्य सामान्येन, विशेषैर्वा, विशेषाणां सामान्येन, विशेषैर्वेति । सामान्यस्य
सामान्येन व्याप्तिर्नानुमानाङ्गभूता, तया च सामान्यस्यैव सिद्धेः सामान्यतया सर्वदेशकाल-
सम्बन्धित्वेन प्रसिद्धस्य साध्यस्य साधने सिद्धसाधनत्वापत्तेः । नापि विशेषैः, देशकाला- 5
नवच्छिन्नैस्तैस्तथात्वे देशकालानवच्छिन्नवह्न्यादीनां सुप्रसिद्धत्वे सिद्धसाधनत्वापत्तेः, तदव-
च्छिन्नैर्व्याप्तित्वे चानुगमाभावात्, नहि धूमसामान्यस्य पर्वतादिस्थैरग्निविशेषैरनुगमोऽस्ति
पर्वतीयवह्न्यभावेऽपि धूमसामान्यस्योपलम्भात । विशेषाणां सामान्येनापि न व्याप्तिः,
पूर्वोदितविधिना सिद्धसाधनत्वापत्तेः पर्वतीयधूमाभाववति महानसादौ वह्निसामान्यस्य
वृत्त्या व्यभिचाराच्च । नापि विशेषाणां विशेषैः, तेषामानन्त्येन दुर्ग्रहात । अत्रोच्यते, 10
सामान्यविशेषवतस्सामान्यविशेषवता व्याप्तिस्तद्ग्राहकस्तर्कः, अत एव यावान् कश्चिद्धूम
इत्याद्यभिलापकं वाक्यमुक्तं तत्र यावत्पदेन सामान्यस्य कश्चिदित्यनेन विशेषस्य बोधः,
तत्रापि न सामान्यविशेषौ केवलौ व्याप्यव्यापकभावेनानुभूयेते, किन्तु जात्यन्तरस्य
सामान्यविशेषोभयात्मनस्तद्रूपतयाऽवभासनादिति ॥

अधुनाऽनुमानलक्षणघटकव्याप्तिस्मरणविषयभूतां व्याप्तिमाह— 15

**हेतौ साध्याभाववदवृत्तित्वं व्याप्तिः । इयमेवाऽन्यथाऽनुपपत्तिप्रति-
बन्धाविनाऽभावशब्दैरुच्यते । वह्निं विना धूमस्यानुपपत्तेर्वह्निसत्त्व एव
धूमोपपत्तेश्च वह्निनिरूपिताऽन्यथाऽनुपपत्त्यादिशब्दवाच्या व्याप्तिर्धूमे
वर्त्तते । अतो धूमो व्याप्यो निरूपकश्च वह्निर्व्यापकः । तथा च व्याप्य-
सत्त्वेऽवश्यं व्यापकसत्त्वं, व्यापकसत्त्व एव च व्याप्येन भवितव्यमिति 20
व्याप्यव्यापकभावनियमः सिद्ध्यति ॥**

**हेताविति** । यो हि व्याप्नोति यश्च व्याप्यते तयोरुभयोर्धर्मो व्याप्तिः, यद्वा व्यापक-

१. अत्र वैशेषिकाः सामान्ययोर्नाविनाभावः सिद्धसाधनात्, अपास्तविशेषं हि व्याप्ति सामान्यं सिद्धं, नियत-
देशकालावच्छेदेन विशेषार्थिनां प्रवृत्तिनिवृत्त्योरभावप्रसङ्गाच्च । न च विशेषयोरविनाभावः तेषामानन्त्येना-
प्रसिद्धेः तदायत्तस्याविनाभावस्य चाप्रसिद्धेः । यावतामुपलम्भस्तावत्स्वेवाविनाभावग्रहणे च नागृहीताविना-
भावस्य विशेषस्योपलम्भादनुमानं स्यात् नैतद्दूषणम्, सामान्यवतोरविनाभावग्रहणाभ्युपगमात् ॥ २. वह्निर्हि
धूमं व्याप्नोति धूमश्च वह्निना व्याप्यत इति व्याप्तिर्वह्निधूमयोर्धर्मः यत्र धर्मिणि पर्वतादौ, सर्वत्रेति व्यभि-
चारवारणाय, सत्त्वमेवेति बाधवारणाय । तत्रैवेति व्यभिचारवारणाय ॥

धर्मतया तस्या विवक्षा तदा व्यापकस्य यत्र धर्मिणि व्याप्यमस्ति तत्र सर्वत्र सत्त्वमेव व्यापकगतो धर्मो व्याप्तिः । यदा तु व्याप्यधर्मतया व्याप्तिर्विवक्ष्यते तदा यत्र धर्मिणि व्यापकोऽस्ति तत्रैव व्याप्यस्य भावो न तदभावेऽपीति सैव व्याप्तिः । पूर्वत्रायोगव्यवच्छेदेनेह चान्ययोगव्यवच्छेदेनावधारणं बोध्यम् । तत्र हेतुनिष्ठव्याप्तेरेव गमकताङ्गतया
5 हेतावित्युक्तम् । तथा चान्ययोगव्यवच्छेदलब्धार्थमाह साध्याभावेति । यत्र धर्मिणि व्यापकं साध्यमस्ति तत्रैव हेतोर्भावः, साध्यं यत्र नास्ति तत्र तस्याभाव एवेति हेतुनिष्ठा व्याप्तिरिति भावः, एतेन यत्र धर्मिणि साध्यमस्ति तत्र साधनस्यैव भावोऽथवा यत्र धर्मिणि साध्यमस्ति तत्र साधनस्य भाव एव व्याप्तिरित्यवधारणं न साधु, तथा च सत्यव्याप्यस्यापि तत्र भावेन हेत्वभावप्रसङ्गः प्रथमावधारणे, द्वितीये च साधारणस्य प्रमेयत्वादेर्हेतुत्वप्रसङ्गः, सपक्षैक-
10 देशावृत्तेश्चाहेतुत्वप्रसङ्गः[1] स्यादिति । इयमेव व्याप्तिरत्र शास्त्रेऽन्यथाऽनुपपत्तिप्रभृतिशब्दैर्व्यवह्रियत इत्याहेयमेवेति, ननु तथोपपत्त्यन्यथानुपपत्तिभ्यां द्विप्रकारेण हेतुप्रयोगो दृश्यते तत्र तत्र शास्त्रे, यथा पर्वतो वह्निमान् तथैव धूमोपपत्तेर्धूमान्यथानुपपत्तेर्वेति । तत्र तथोपपत्तिरन्वयोऽन्यथानुपपत्तिर्व्यतिरेकस्तत्कथमत्रान्यथाऽनुपपत्तेरेव व्याप्तित्वमुक्तमिति जिज्ञासायामाह वह्निं विनेति, वह्निं विना धूमस्यानुपपत्तेरित्यनेन व्यतिरेकरूपान्यथानुपपत्तिः, वह्निसत्त्व
15 एव धूमोपपत्तेश्चेत्यनेनान्वयरूपा तथैवोपपत्तिश्च प्रदर्शिता । अनयोरुभयोरपि[2] परस्पराव्यभिचारित्वेन तयोरन्यथानुपपत्तिशब्दग्राह्यत्वमेव, नहि कश्चिद्विशेषस्तयोरित्यभिप्रायेणाहान्यथानुपपत्त्यादिशब्दवाच्येति । तेनैकत्र तयोरन्यतरस्य प्रयोगे साध्यसिद्धावपरप्रयोगस्य वैयर्थ्यमेवेति भावस्सूचितः । आदिना प्रतिबन्धाविनाभावौ ग्राह्यौ, हेतुनिष्ठव्याप्तेरेवानुमानौपयिकतया हेतुर्व्याप्यो निरूपकश्च साध्यं व्यापकमित्याहात इति, हेतुनिष्ठव्याप्तेरनुमित्यौपयिकत्वा-
20 दित्यर्थः, व्याप्यो व्याप्त्याश्रयः, वह्निर्व्याप्तिनिरूपकः तथा च वह्निनिरूपितव्याप्त्याश्रयत्वाद्धूमो वह्निव्याप्यः, धूमवृत्तिव्याप्तिनिरूपकत्वाद्वह्निर्धूमव्यापक इति भावः । व्याप्यव्यापकयोरुभयत्र व्याप्तेर्नैकाकारप्रतीतिविषयत्वमिति स्पष्टयति तथा चेति, धूमस्य व्याप्यत्वे वह्नेश्च व्यापकत्वे इत्यर्थः । अवश्यं व्यापकसत्त्वमिति, व्यापकस्य सत्त्वमेवेत्यर्थः, नतु व्यापकस्यैव भाव इति, व्यापकाभावप्रसङ्गात्, मूर्त्तत्वादेरव्यापकस्यापि तत्र सत्त्वात् । व्यापकसत्त्व एव
25 चेति, तथा चायोगाऽन्ययोगव्यवच्छेदाभ्यां विभिन्नाकारतयोभयत्रैकाकारत्वविरहेणैवमेव व्याप्यव्यापकभावस्य नियमो भवतीति भावः ॥

---

१. पर्वतो वह्निमान् धूमादित्यादिहेतोरित्यर्थः, सपक्षैकदेशेऽयोगोलकादौ धूमस्याविद्यमानत्वादिति भावः ॥
२. यत्र धर्मिणि व्यापकोऽस्ति तत्रैव व्याप्यस्य भावो न तदभावेऽपीत्यवधारणमभ्युपेत्य लक्षणप्रणयनेन तदन्तर्गततयोभयविधस्यापि लाभेनेदृशव्याप्तेरन्यथानुपपत्तिशब्दवाच्यत्वे तदुभयोरपि ग्रहणसंभवादिति भावः ॥

ईदृशनियमस्य स्वरूपत एकविधत्वेऽप्याश्रयविशेषापेक्षया द्वैविध्यमाह—

**सोऽयं व्याप्त्यपरपर्यायो नियमो द्विविधः, सहभावनियमः, क्रमभावनियमश्चेति ॥**

**सोऽयमिति** । पूर्वोपदर्शितस्वभावोऽयमित्यर्थः, अस्य नियम इत्यनेन सम्बन्धो नियम एव व्याप्तिरिति सूचयितुमुक्तं व्याप्त्यपरपर्याय इति । सहेति, हेतुसाध्ययोरेकस्मिन् काले 5 विद्यमानयोर्नियम इत्यर्थः । क्रमेति, पौर्वापर्यक्रमेण जायमानयोस्तयोर्नियम इत्यर्थः ॥

तत्र सहभावनियमः केषामित्यत्राह—

**तत्र सहभावनियम एकसामग्रीप्रसूतयो रूपरसयोर्व्याप्यव्यापकयोश्च शिंशपात्ववृक्षत्वयोर्भवति ॥**

**तत्रेति** । द्विविधे नियम इत्यर्थः । सह भाव उत्पत्तिः स्थितिर्वा सहभावस्तस्य नियम 10 इति व्युत्पत्तिं मनसि निधायाद्याया निदर्शनमाहैकसामग्रीप्रसूतयोरिति, जनकसामग्र्या एकत्वेन रूपरसयोस्सहैवोत्पादेन तयोर्नियमस्सहभावनियम उच्यत इति भावः । अत्रान्यतरस्य व्याप्यत्वं व्यापकत्वञ्च यादृच्छिकमिति बोध्यम् । द्वितीयां व्युत्पत्तिमभिप्रेत्याह व्याप्यव्यापकयोरिति परस्परं न्यूनाधिकदेशवर्तिनोरित्यर्थः, तथा च रूपं वृक्षत्वं वा विना रसस्य शिंशपाया वाऽनुपपत्तेः रूपस्य वृक्षत्वस्य च सत्त्व एव रसस्य शिंशपात्वस्योपपत्तेश्च 15 तयोर्नियमस्सहभावनियम इति भावः ॥

केषां क्रमभावनियम इत्यत्राह—

**क्रमभावनियमस्तु कृत्तिकोदयरोहिण्युदययोः पूर्वोत्तरभाविनोः, कार्यकारणयोश्च धूमवह्न्योर्भवति ॥**

**क्रमभावेति** । क्रमः पूर्वापरभावः, स चाकार्यकारणयोः कार्यकारणयोश्च भवती- 20 त्याद्यस्य निदर्शनमाह कृत्तिकेति । अत्र शकटोदये न कृत्तिकोदयस्य कारणत्वमपि तु पौर्वापर्यमात्रमिति भावः । कार्यकारणयोर्दृष्टान्तमाह कार्येति, भवतीति, नियम इति शेषः ॥

ननु हेतुज्ञानसहकृतेन व्याप्तिस्मरणेन साध्यविज्ञानमनुमानमिति प्राग्वर्णितं, तत्र किन्तावत्साध्यमित्यत्राह—

**प्रमाणाबाधितमनिर्णीतं सिषाधयिषितं साध्यम् । यथा वह्निमत्पर्व-** 25

**नः। अस्यैव च पक्ष इति नामान्तरम्। साध्यविशिष्टत्वेन धर्मिण एव सिषाधयिषितत्वात्, इदञ्चानुमानजन्यप्रतिपत्तिकालापेक्षया॥**

**प्रमाणेति**। प्रमाणपदेनात्र प्रमाणत्वावच्छिन्नं ग्राह्यं तथा च प्रमाणत्वावच्छिन्नेन येन केनचिदप्यबाधितमित्यर्थः, एतेन बाधितस्य साध्यत्वव्यावृत्तिः कृता भवति, यथा शब्दोऽ-
5 श्रावण इति प्रत्यक्षबाधितं साध्यम्, नित्यश्शब्द इति शब्दस्यानित्यत्वसाधकेनानुमानेन बाधितम्, धर्मः प्रेत्यासुखप्रद इति धर्मः प्रेत्यसुखप्रद इत्यागमेन बाधितम्, माता मे वन्ध्येति स्ववचनबाधितं, नरशिरःकपालं शुचीति लोकबाधितम्, एवंरूपाणां व्यावर्त्तनाय प्रमाणाबाधितमिति पदम्। स्थाणुर्वा पुरुषो वेति संशयविषयस्य, शुक्तिकाशकलं रजतमिति विपर्यासविषयस्य, यथावदनिश्चितस्वरूपस्य गृहीतस्यागृहीतस्य वार्थस्य साध्यताप्रतिपत्त्यर्थम-
10 निर्णीतपदम्, एतद्वैपरीत्ये हि साधनं विफलमेव भवेदिति। अनिष्टस्य सर्वथाऽनित्यत्वादेरसाध्यत्वप्रतिपत्तये सिषाधयिषितमित्युक्तम्। साधनेच्छाविषयीभूतमित्यर्थः, साधनं स्वाभिप्रेतार्थस्य, इच्छा वक्तुस्तथा च स्वाभिप्रेतार्थसाधनविषयकवक्त्रिच्छाविषयीभूतमिति भावः, वाद्यपेक्षया साधनेच्छा भवति, संहतपरार्थत्वं चक्षुरादीनां स्वीकर्त्तारं बौद्धं प्रति सांख्येन परार्थाश्चक्षुरादय इत्येवं पारार्थ्यमात्रस्याभिधानेऽपि सांख्येच्छाविषयीभूतमात्मार्थत्वमेव
15 साध्यं भवति, अन्यथा साधनं निरर्थकमेव स्यात्। प्रमाणाबाधितमिति पदं वादिप्रतिवाद्युभयापेक्षया। वादिप्रतिवादिनोः प्रमाणेन यन्न बाध्यते तदेव हि कथायां साध्यमिति। साध्यस्य दृष्टान्तमाह यथेति, वह्निना विशिष्टः पर्वतस्साध्य इत्यर्थः, अस्यैव साध्यस्य पर्यायशब्दमाहास्यैव चेति, अत्र हेतुमाह साध्येति। प्रतिनियतसाध्यधर्मविशेषणविशिष्टतया धर्मिणस्साधयितुमिष्टत्वात्साध्यव्यपदेशः कथायां पक्षव्यपदेशभाग् भवतीति भावः, ननु साध्यं
20 धर्मो वा धर्मविशिष्टो धर्मी वा, यदि धर्मस्तदा कथं पक्षस्य साध्यत्वमुक्तं, यदि धर्मविशिष्टो धर्मी साध्यं, तदा कदाऽयं साध्यशब्दवाच्य इत्याशंकायामाहेदञ्चेति, पक्षापरपर्यायधर्मविशिष्टो धर्मी चेत्यर्थः। प्रयोगकालापेक्षया साध्यशब्दवाच्यो भवतीति भावः॥

अनुमानप्रभवप्रतिपत्तिकालापेक्षया साध्यधर्मविशिष्टप्रसिद्धधर्मिणस्साध्यत्वेऽपि तेन सह हेतोरविनाभावासंभवात्कथमनुमितिरित्यत्राह—

25 **व्याप्तिग्रहणवेलायान्तु वह्न्यादिर्धर्म एव साध्यः॥**

---

१. संशयितस्य पुरुषस्य संशयापनोदनार्थमिव विपर्यस्ताव्युत्पन्नयोरपि विपर्ययानध्यवसायापनयनायानुमानप्रवृत्तिर्भवत्येव, परपक्षदिदृक्षादिना विपर्यस्तस्याव्युत्पन्नस्य स्वयं तत्त्वबुभुत्सया च परं प्रत्युपसर्पणसम्भवादिति भावः॥

व्याप्तीति । वह्न्यादिधर्म एवेति, एवशब्देन तद्विशिष्टधर्मिणो व्यवच्छेदः, तत्र व्याप्तेरसम्भवात्, नहि धूमदर्शनात् सर्वत्र पर्वतो वह्निमानिति व्याप्तिश्शक्या विधातुं प्रत्यक्षादिप्रमाणविरोधात् । साध्य इति साधयितुं योग्य इत्यर्थः । इत्थञ्चानुमानस्य त्रीण्यङ्गानि, धर्मी साध्यं साधनञ्च, तत्र साधनं गमकत्वेनाङ्गम्, साध्यन्तु गम्यत्वेन, धर्मी पुनः साध्यधर्माधारत्वेन, आधारविशेषनिष्ठतया साध्यसिद्धेरनुमानप्रयोजनत्वात् । अथवा पक्षो हेतुरित्यनुमानाङ्गं द्वयं, साध्यधर्मविशिष्टधर्मिणः पक्षत्वात्, इदञ्च धर्मधर्मिणोरभेदापेक्षया, पूर्वन्तु भेदापेक्षया विज्ञेयम् ॥ 5

ननु सिषाधयिषितस्यैव धर्मिणस्साध्यत्वोक्त्या प्रसिद्धस्यैव धर्मित्वं लब्धं सामान्यतो विज्ञातस्यैव किञ्चिद्धर्मविशिष्टत्वेन सिषाधयिषितत्वात् तथा च तत्प्रसिद्धिः कथन्तरां स्यादिति पर्यनुयोगे प्राह— 10

**धर्मिणश्च प्रसिद्धिः प्रमाणाद्विकल्पादुभयतो वा ज्ञेया । यथाऽस्ति सर्वज्ञ इत्यत्र धर्मिणस्सर्वज्ञस्य विकल्पात्सिद्धिः । पर्वतो वह्निमानित्यत्र पर्वतस्य प्रत्यक्षप्रमाणात्, शब्दः परिणामीत्यादौ कालत्रयवर्त्तिशब्दधर्मिण उभयस्मात् ॥**

धर्मिणश्चेति । प्रमाणादिति निश्चितप्रामाण्यकप्रत्यक्षाद्यन्यतमादित्यर्थः, विकल्पादिति, अनिश्चितप्रामाण्याप्रामाण्यकप्रत्ययादित्यर्थः, उभयत इति, निश्चितप्रामाण्यकप्रत्यक्षाद्यन्यतमादनिश्चितप्रामाण्याप्रामाण्यकप्रत्ययाच्चेत्यर्थः । नन्वस्तु निश्चितप्रामाण्यकप्रत्यक्षादिभ्यो धर्मिप्रसिद्धिः, प्रामाण्येनाप्रामाण्येन वाऽनिर्णीतया प्रतीत्या कथं धर्मिप्रसिद्धिः, तस्याः प्रमाणत्वाभावात्, प्रमाणात्मिकयैव च प्रतीत्या वस्तुसिद्धेः । तस्याश्च प्रमाणत्वे प्रमाणादित्यनेनैव गतार्थतया विकल्पादिति व्यर्थमेव भवेत् । अप्रमाणत्वे तु न ततो धर्मिसिद्धिः, किञ्च विकल्पसिद्धे धर्मिणि सत्त्वमसत्त्वं वा प्रमाणबलेन साधनीयं यथाऽस्ति सर्वज्ञो नास्ति षष्ठं भूतमित्यादौ । तच्च न सम्भवति, धर्मिणो वस्तुतोऽसत्त्वेन भाववृत्तिधर्मस्य हेतुत्वेऽसिद्धिप्रसरात्, भाववृत्तिधर्मस्य तत्र सत्त्वे च धर्मिणोऽपि भावत्वापत्त्या नास्तित्वसाधनमसङ्गतं स्यात् । अभाववृत्तिधर्मस्य हेतुत्वे त्वस्तित्वसाधनस्य विरोधात्, उभयवृत्तिधर्मस्य हेतुत्वे व्यभिचारादित्यनुयोगे प्रबले जाते प्रमाणाद्धर्मिप्रसिद्धेरुदाहरणप्रदर्शनं विहाय प्रथमत एव विकल्पप्रसिद्धधर्मिणमुदाहरति यथेति, अत्रायम्भावः, ये विकल्पेन धर्मिप्रसिद्धिं नाभ्युपगच्छन्ति ते विकल्पसिद्धो धर्मी न भवति तस्याप्रमाणत्वादित्यपि 15 20 25

वक्तुं न शक्नुवन्ति, प्रोक्तक्रमेणासिद्धिविरोधादीनां सम्भवात्, प्रमाणेनात्र धर्म्यसिद्धेः। तथात्वे च परं प्रत्याश्रयासिद्ध्यनुद्भावनं व्यर्थमेव स्यात् येन हि यो धर्मितयोपात्तस्तत्रैव दोषः प्रदर्शनीयस्तथा च तत्र दोषमुद्भावयता भवताऽवश्यं विकल्पेन धर्मिप्रसिद्धिरभ्युपेयैवान्यथा तूष्णीम्भावापत्तिः, एवञ्चास्ति सर्वज्ञ इत्यादिमानसप्रत्यक्षे भावरूपस्यैव धर्मिणः
5 प्रतिपन्नत्वान्न कोऽपि दोषः, न च तत्सिद्धौ तत्सत्त्वस्यापि प्रतिपन्नत्वेन व्यर्थमनुमानमिति वाच्यम्, तदभ्युपेतमपि वैयात्याद्यो न प्रतिपद्यते तं प्रत्यनुमानस्य साफल्यात्, न च षष्ठभूतादेः कथं धर्मित्वं, मानसप्रत्यक्षेण तत्सत्त्वस्यापि प्रतिपन्नतया नास्तित्वसाधनस्य बाधितत्वादिति वाच्यम्, तदानीं बाधकप्रत्ययानुदयेन सत्त्वे सम्भावितेऽपि पश्चात्तत्सत्ताया निषेधनात्, एवमेव गगनकुसुमादीनामपि विकल्पकाले सत्त्वेन सम्भावितानामपि पश्चाद्बाध-
10 कप्रत्ययेन तन्निरासात्तादृशमानसज्ञानस्य मानसप्रत्यक्षाभासत्वमवसेयमिति ॥ अथ प्रमाणाद्धर्मिप्रसिद्धेर्निदर्शनमादर्शयति पर्वत इति, अत्र प्रत्यक्षेण पर्वतस्य प्रसिद्धिरिति भावः। एतेनानुमानानुमेयव्यवहारस्सर्व एव बुद्धावेव किमपि धर्मित्वेन किमपि च धर्मत्वेन प्रकल्प्य प्रवर्त्तते, नतु बाह्यं सदसत्त्वमपेक्ष्येति मतमपास्तम्, अन्तर्बहिर्वाऽनासादिताऽऽलम्बनाया बुद्धेर्धर्मधर्मित्वेन कस्यापि व्यवस्थापनाऽसामर्थ्यात्। तस्मात्प्रमाणेन व्यवस्थापितः पर्वता-
15 दिरेव विषयभावं भजन् धर्मित्वादिकं प्रतिपद्यत इति। उभयसिद्धं निदर्शयति शब्द इति, अत्र हि शब्दमात्रस्य धर्मित्वमिष्टमन्यथा यस्मिन् कस्मिन्नेव शब्दे परिणामित्वस्य सिद्ध्यापत्तेः, तथा च सर्वेषां शब्दानां श्रवणेन प्रत्यक्षासम्भवेन केषाञ्चित्प्रत्यक्षतः केषाञ्चिच्च विकल्पतः प्रसिद्धिर्भवतीति भावः। ननु पर्वतो वह्निमानित्यत्रापि प्रत्यक्षसिद्धत्वं पर्वतस्य कथं, दृश्यमानभागेऽग्निमत्त्वसाधने प्रत्यक्षबाधा, तत्र वह्न्युपलब्धौ वा साधनवैयर्थ्यमदृश्यमा-
20 नभागे तु साधने कुतो धर्मिणः प्रत्यक्षसिद्धत्वमिति चेन्मैवम्, अवयविद्रव्यापेक्षया पर्वतादेस्सांव्यवहारिकप्रत्यक्षप्रसिद्धताभिधानात्। अतिसूक्ष्मेक्षिकया पर्यालोचने तु न किञ्चित्प्रत्यक्षं, अस्मदादिप्रत्यक्षस्याशेषविशेषतोऽर्थसाक्षात्कारे सामर्थ्यविरहात् केवलिप्रत्यक्षस्यैव तत्र सामर्थ्यादिति ॥

तदेवं धर्मिसाध्यसाधनरूपमनुमानस्य प्रधानभूतमङ्गत्रयं निरूप्य सम्प्रति हेतुं विभजते—

25 **हेतुर्द्विविधो विधिस्वरूपः प्रतिषेधस्वरूपश्चेति। तथा विधिस्वरूपो हेतुर्द्विधा, विधिसाधको निषेधसाधकश्चेति, एवं प्रतिषेधस्वरूपो हेतुरपि॥**

**हेतुरिति**। विधिस्वरूप उपलम्भस्वरूपः, प्रतिषेधस्वरूपोऽनुपलम्भस्वरूपः। विधिस्वरूपस्यापि द्वैविध्यमाह तथेति, ईदृशमेव प्रकारभेदं प्रतिषेधस्वरूपहेतावप्यतिदिशति एव-

मिति । तथा च विधिसाधको विधिरूपः, निषेधसाधको विधिरूपः, विधिसाधकः प्रतिषेधरूपः, निषेधसाधकः प्रतिषेधरूपश्चेति हेतुश्चतुर्विधः फलितः । एतेनोपलम्भस्वरूपस्य हेतोर्विधिसाधकत्वमेवानुपलम्भस्वरूपस्य हेतोः प्रतिषेधसाधकत्वमेवेति केषाञ्चिन्नियमो निरस्तः । साध्यसाधनयोर्गम्यगमकभावे व्याप्तेरेव प्रयोजकतया व्याप्तिसत्त्वेन विधिसाध्ये उपलम्भरूपहेतोर्गमकत्वस्येव तत्सत्त्वेऽनुपलम्भहेतोरपि तत्साधने गमकत्वस्य दुर्निवारतयैकशेपस्यानुचितत्वादिति ॥ 5

तत्र विधिसाधकं विध्यात्मकं हेतुं षोढा विभजते—

**तत्र विधिसाधको विधिरूपो हेतुर्व्याप्यकार्यकारणपूर्वोत्तरसहचरभेदात् षोढा । विधिस्तु सदसदात्मके पदार्थे सदंशः, असदंशश्च प्रतिषेधः ॥** 10

**तत्रेति,** व्याप्यं कार्यं कारणं पूर्वचरमुत्तरचरं सहचरं चेति हेतुभूतानि वस्तूनि षड्विधानि विधिभूतसाध्यसाधकानीत्यर्थः । विधिप्रतिषेधशब्दार्थं वक्ति विधिस्त्विति, पदार्थो हि सदसदात्मकः, तत्र योऽयं सदंशस्स एव विधिरुच्यते, अभावापरपर्यायस्त्वसदंशः प्रतिषेध उच्यत इति भावः ॥

प्रसङ्गादभावस्य सर्वथा भावस्वरूपातिरिक्तत्वं दूषयितुं प्रतिषेधं विभज्य तत्स्वरूपं 15 वक्तुमुपक्रमते—

**प्रतिषेधश्चतुर्धा प्रागभावप्रध्वंसाभावान्योऽन्याभावात्यन्ताभावभेदात् । यन्निवृत्तावेव कार्याविर्भावः स प्रागभावः, यथा घटं प्रति मृत्पिण्डः ॥**

**प्रतिषेध इति ।** अत्रायम्भावः, पदार्थानामस्तित्वेनैवोपगमे सर्वेषामभावानामपह्नवेन सर्वस्य सर्वात्मकत्वप्रसङ्गः । प्रागभावानङ्गीकारे निर्विकारत्वं द्रव्यस्य स्यात् तथा च घट- 20 पटादीनामभाव एव स्यात् । प्रध्वंसाभावानभ्युपगते कटककुण्डलादीनामनन्तत्वप्रसङ्गः अन्योऽन्याभावापलापे जीवस्याजीवात्मकत्वेऽजीवस्य जीवात्मके सर्वात्मकत्वप्रसङ्गेन तयोर्लक्षणभेदो न स्यात् । अत्यन्ताभावानभ्युपगमे च जीवे अजीवत्वात्यन्ताभावानभ्युपगमात् अजीवत्वस्याजीवे च जीवत्वाभावानभ्युपगमाज्जीवत्वस्य प्राप्तेः । तस्माद्वस्तुनो यथाऽस्तीति प्रत्ययविषयमस्तित्वं पर्यायस्तथा नास्तीति प्रतीतिविषयं नास्तित्वमपि पर्यायः, 25 तच्च नास्तित्वं न सर्वथा वस्तुनोऽर्थान्तरम्, निःस्वभावत्वप्रसङ्गात्, न च नास्तीति

प्रत्ययजनकत्वरूपसद्भावान्नाभावस्य निःस्वभावत्वमिति वाच्यम्, तथा सति तस्य भावस्वभावत्वसिद्धेः, प्रत्ययाभिधानविषयस्यार्थक्रियाकारिणः पदार्थस्य भावस्वभावत्वात्, नास्तित्वस्य च वस्तुधर्मत्वाद्धर्मस्य कथञ्चिद्धर्मिभिन्नत्वेन कथञ्चिद्भेदोऽपि, तत्राभेदाश्रयणे भावत्वेन भेदाश्रयणे च तद्वृत्तित्वेनाभावस्य प्रतीतिः, एतेन भूतलस्य घटाभावत्वे
5 भूतले घटाभाव इति प्रतीतिर्न स्यात् स्याच्च भूतले भूतलमिति धीरित्यपास्तम्। अभेदेऽपि घटाभावत्वेनाधेयताया भूतलत्वेन चाधारताया यथाप्रतीति स्वीकारादिति भावः। अथ प्रागभावं लक्षयति यन्निवृत्तावेवेति, विलक्षणपरिणामविशिष्टस्य मृत्पिण्डस्य तेन रूपेण विनाशे हि घटरूपतया मृत्पिण्डः परिणमत इति घटरूपतयोत्पत्तेः प्रागव्यवहितपरिणामविशिष्टं मृद्द्रव्यमेव तत्प्रागभाव उच्यते न तु मृत्पिण्डात्सर्वथाऽर्थान्तरमिति भावः,
10 इदमेव दृष्टान्तद्वारा प्रदर्शयति यथेति, घटस्य प्रागभावश्च तदव्यवहितपूर्वक्षणपरिणाम इत्येके, तेषां तत्पूर्वानादिपरिणामसन्ततौ कार्यसद्भावप्रसङ्गः, कार्यध्वंसतत्प्रागभावानाधारकालस्य कार्यवत्त्वव्याप्यत्वात्। तत्पूर्वानादिपरिणामसन्ततौ कार्यभेदसत्त्वान्न दोष इति चेन्नाव्यवहितकार्यपूर्वपरिणामेऽपि कार्यभेदसत्त्वेन तेनैव तदानीं कार्याभावसिद्धेः प्रागभावस्वीकारनिरर्थकतापत्तेः, न च कार्यस्य प्रागभावाभावस्वभावत्वसिद्ध्यर्थं तदभ्युपगम इति-
15 वाच्यम्, कार्यपूर्वोत्तरनिखिलपरिणामेषु कार्यानन्तरपूर्वपर्यायभिन्नेषु कार्यस्वभावताप्रसङ्गात्। न च न कार्यप्रागभावाभावत्वं कार्यस्वभावत्वव्याप्यं किन्तु कार्यप्रागभावध्वंसत्वमेव, सोऽपि ध्वंसोऽव्यवहितोत्तरक्षण एव वर्त्तते, तदुत्तरक्षणेषु घटादिव्यवहारश्च सदृशकार्योत्पत्तिदोषादिति वाच्यम्। एतस्य सौगतानामेव शोभनत्वादस्माभिः प्रागभावस्यानादित्वोपगमात्। प्रागभावध्वंसस्य द्वितीयादिक्षणेष्वसत्त्वे प्रागभावोन्मज्जनप्रसङ्गेन प्राग-
20 भावक्षण इव तत्रापि कार्यस्यासद्भावप्रसङ्गात्तत्र दोषाभ्युपगमस्य चाप्रामाणिकत्वात्। तस्माद् द्रव्यपर्यायात्मा प्रागभावः स च स्यात्सादिस्स्यादनादिरिति सिद्धान्तात्। न च द्रव्यरूपतयाऽनादित्वेऽनन्तत्वप्रसक्तेस्सर्वदा कार्यानुत्पत्तिः स्यात् पर्यायरूपतया च सादित्वे प्रागभावात्पूर्वमपि पश्चादिव कार्योत्पत्तिः स्यादित्युभयत्र दोषात् भावस्वभावो न प्रागभावस्तस्य भावविलक्षणत्वेन सर्वदा भावविशेषणत्वादिति वाच्यम्, सर्वथा भावविलक्षणाभावग्राहक

१. इदानीं घट इत्यादिप्रतीत्या तत्तत्क्षण एव तदभिन्नकार्याणां बौद्धमते तादात्म्येन कालवृत्तित्वोपगमात् कार्यभिन्नक्षणे कार्यत्वस्यापादयितुमशक्यत्वादिति भावः ॥ २. ते हि पर्यायार्थमात्रादेशं स्वीकुर्वन्तीति तेषामेवेदं शोभनं उभयनयवादिनामस्माकन्तु तत्सिद्धान्तविरुद्धमिति भावः ॥ ३. ननु भवदुक्तेनैवं फलति पूर्वपर्यायेषु मृद्द्रव्ये च प्रागभावत्वं व्यासज्यवृत्तीति तन्न सम्यक् प्रत्येकावृत्तेस्समुदायावृत्तित्वात्, प्रत्येकवृत्तित्वे च दोषादित्याशयेनाशंकते न चेति ॥

प्रमाणाभावात् । न च स्वोत्पत्तेः पूर्वं नासीद्घट इति ज्ञानमभावविषयकं भावप्रत्ययविलक्षणत्वाद्यस्तु भावविषयो नासौ भावप्रत्ययविलक्षणो यथा घट इत्यादिप्रत्यय इत्यनुमानं प्रागभावग्राहकमिति वाच्यम्, प्रागभावादौ नास्ति प्रध्वंसाभावादिरिति प्रत्ययेन व्यभिचारात् । न च सोऽपि प्रत्ययोऽभावविषय इति न व्यभिचार इति वाच्यम्, अभावानवस्थाप्रसङ्गात् । अत एव प्रागभावस्य सर्वदा भावविशेषणत्वमसिद्धं प्रध्वंसाभावादौ 5
न प्रागभाव इत्यादौ प्रागभावस्याभावेऽपि विशेषणत्वात् । तस्माद्दृजुसूत्रनयार्पणात् कार्यस्याव्यवहितपूर्वोपादानपरिणाम एव प्रागभावः । न च तत्पूर्वानादिपरिणामसन्ततौ कार्यसद्भावप्रसङ्ग इति वाच्यम्, यतो घटस्य प्रागभावः कुसूलं तस्य कोशस्तस्य स्थासस्तस्यापि मृत्पिण्ड एवं परमाणौ तत्परम्पराया विश्रान्तिस्तथा च तत्परम्परानाधारघटध्वंसपरम्परानाधारकालत्वस्यैव घटव्याप्यत्वेन नाघटकाले घटवत्त्वप्रसङ्ग इति । व्यवहार- 10
नयार्पणात्तु मृदादिद्रव्यं घटादेः प्रागभावः स चानादिः । न च घटादेः प्रागभावाभावस्वभावत्वं न सम्भवति मृदादिद्रव्यस्याभावासम्भवादिति वाच्यम्, घटादिरहितस्य पूर्वकालविशिष्टस्य मृदादिद्रव्यस्यैव घटादिप्रागभावरूपतया तस्य च कार्योत्पत्तौ विनाशसिद्धेः, नहि कार्यरहितत्वस्य विनाशमन्तरेण कार्यसहिततयोत्पत्तिस्सम्भवति, प्रमाणार्पणात्तु द्रव्यपर्यायात्मा प्रागभाव इति ॥ 15

प्रध्वंसाभावं निरूपयति—

**यदुत्पत्तिनिबन्धनं कार्यविघटनं स प्रध्वंसाभावः । यथा घटं प्रति कपालकदम्बकम् ॥**

**यदुत्पत्तीति ।** यस्य भावे नियमेन कार्यस्य विघटनं भवति स प्रध्वंसाभाव इत्यर्थः, दृष्टान्तमाह यथेति कपालकदम्बकोत्पत्तौ सत्यां ह्यवश्यं घटस्य विपद्यमानता भवत्यतः 20
कपालकदम्बकमेव तत्प्रध्वंसाभाव इति भावः । अत्रापि ऋजुसूत्रार्पणादुपादेयक्षण एवोपादा-

---

१. अभावाधिकरणकाभावप्रतियोगिकाभावस्याधिकरणात्मकत्वेन प्रागभावभिन्नप्रध्वंसाभावाभावाविषयकत्वेन हेतुसत्त्वेऽपि साध्याभावाद्व्यभिचार इति भावः ॥ २. कालविशेषावच्छिन्नस्वरूपसम्बन्धेन मृद्द्रव्यं घटप्रागभावव्यवहारनिमित्तं, पूर्वकालात्मकस्य कालविशेषस्य संसर्गघटितत्वेन तस्य च प्रागनुपस्थितस्य संसर्गत्वे कस्याप्यविवादादत्र नान्योऽन्याश्रयः । न चैवं कालविशेषघटितसम्बन्धेन मृदादिद्रव्यमेव घटादिव्यवहारविषयोऽस्तु किमतिरिक्तेन घटादिद्रव्येणेति वाच्यम्, मृदादिद्रव्याद्घटादिद्रव्यस्य पृथगनुभूयमानत्वेन तन्मात्रत्वाकल्पनात्, प्रागभावादेस्तु पृथगनुभूयमानत्वाभावेनाधारमात्रस्वरूपत्वकल्पनात्, घटस्वरूपे मृदादिद्रव्य आधारभिन्नत्वमुद्भूतं, अभावपर्याये त्वनुद्भूतमिति भावः ॥

नस्य प्रध्वंसः, न चैवं तदुत्तरक्षणेषु प्रध्वंसस्याभावेन घटादेः पुनरुज्जीवनं स्यादिति वाच्यम्, कारणस्य[1] कार्योपमर्दनात्मकत्वाभावात् उपादानोपमर्दनस्यैव कार्योत्पत्त्यात्मकत्वात् प्रागभावप्रध्वंसयोरुपादानोपादेयरूपतोपगमेन तदुपमर्दनेनैव प्रध्वंसस्य कार्यात्मन आत्मलाभात्। प्रागभावे कारणात्मनि पूर्वक्षणवर्त्तिनि सति हि प्रध्वंसस्य कार्यात्मनस्स्वरूपलाभोपपत्तिरिति।
5 व्यवहारनयादेशाच्च घटोत्तरकालवर्त्तिघटाकारविकलं मृदादिद्रव्यं[2] घटप्रध्वंसः। स चानन्तः। तेन घटात्पूर्वकालवर्त्ति मृदादिद्रव्यं घटस्य प्रागभाव एव नतु प्रध्वंसः, तथा घटाकारमपि तत्तस्य प्रध्वंसो मा भूदिति घटाकारविकलमिति विशेषणम्। प्रमाणार्पणया तु प्रध्वंसो द्रव्यपर्यायात्मैकानेकस्वभावश्चेति ॥

अथान्योऽन्याभावमाख्याति—

10 **स्वरूपान्तरात्स्वरूपव्यवच्छेदोऽन्योन्याभावः, यथा पटस्वभावाद्घटस्वभावस्य ॥**

**स्वरूपान्तरादिति** । स्वभावान्तरात्स्वभावव्यवच्छेदोऽन्यापोहापरनामकोऽन्योऽन्याभावः। दृष्टान्तमाह यथेति व्यवच्छेद इति शेषः। न चेदं लक्षणं प्रागभावप्रध्वंसाभावयोरपि गतमिति वाच्यम्, कार्यात्पूर्वोत्तरपरिणामयोस्स्वभावान्तरत्वेऽपि कार्यस्य पूर्वोत्तर-
15 परिणामरूपव्यावृत्तेर्विलक्षणत्वात् यदभावे हि नियमतः कार्यस्योत्पत्तिस्स प्रागभावः, यद्भावे च कार्यस्य नियता विपत्तिस्स प्रध्वंसाभावः, न चान्योऽन्याभावस्याभावे भावे च कार्यस्योत्पत्तिर्विपत्तिर्वा, जलस्याभावेऽप्यनलस्यानुत्पत्तेः क्वचित्तद्भावे च तस्याऽविपत्तेः। एतस्य लक्षणस्य नात्यन्ताभावेऽतिव्याप्तिः, अस्य कालत्रयापेक्षत्वात्। अन्योऽन्याभावस्तु न कालत्रयापेक्षो घटभिन्नस्यापि कदाचित् पुद्गलपरिणामानामनियमेन पटस्य घटत्वपरिणामसम्भवात्,
20 तथा परिणामकारणसम्पत्तौ विरोधाभावात्। न चैवं चेतनाचेतनयोः कदाचित्तादात्म्यपरिणामः, तत्त्वविरोधादिति भावः ॥

अत्यन्ताभावं लक्षयति—

**कालत्रयेऽपि तादात्म्यपरिणतिनिवृत्तिरत्यन्ताभावः यथा जीवाजीवयोः। सोऽयं प्रतिषेधः कथञ्चिदधिकरणाद्भिन्नाभिन्नः ॥**

---

१ कारणस्य घटस्य कार्यं तद्ध्वंसस्तस्योपमर्दनात्मकत्वाभावान्नाशानात्मकत्वादित्यर्थः, घटो हि कारणं तेन घटध्वंसनाशो न घटात्मेति भावः ॥ २. घटप्रध्वंसव्यवहारविषयत्वं न घटोत्तरकालवर्त्तिघटाकारविकलमृद्द्रव्यत्वेन, ध्वंसघटितोत्तरत्वगर्भितत्वेनान्योऽन्याश्रयात् किन्तु स्वोत्तरकालवृत्तित्वस्वाकारविकलत्वस्वद्रव्यत्वैतत्त्रितयसम्बन्धेन घटविशिष्टत्वेन ॥

**कालत्रयेऽपीति ।** भूतभविष्यद्वर्तमानरूपकालत्रयापेक्षयापि ययोस्तादात्म्यपरिणतिनिवृत्तिरेकत्वपरिणामो न भवति सोऽत्यन्ताभाव इत्यर्थः । दृष्टान्तमाह यथेति । अस्तित्ववन्नास्तित्वस्यापि वस्तुपर्यायत्वेन पर्यायपर्यायिणोश्च कथञ्चिदभेदान्न सर्वथाऽभावोऽधिकरणभिन्न इत्याह सोऽयं प्रतिषेध इति । सर्वथा तस्य भेदे निःस्वभावत्वमभेदे च तद्वृत्तित्वेनाप्रतीतिः[1] स्यात् सर्वथा अभावस्य भावभिन्नत्वे च तस्य प्रमाणावेद्यत्वापत्तेः, प्रमाणस्य भावविषयत्वात् । 5
न च प्रत्यक्षमभावविषयं भवत्येव तस्येन्द्रियैस्संयुक्तविशेषणसम्बन्धसद्भावात् घटाभावविशिष्टं भूतलं गृह्णामीति प्रत्ययादिति वाच्यम्, तत्रापि प्रत्यक्षस्य भूतलादिभावमात्रविषयत्वात् तस्याभावविषयकत्वे क्रमतोऽनन्तपररूपाभावप्रतिपत्तावुपक्षीणशक्तिकत्वेन भावदर्शनस्यानवसरत्वप्राप्तेः । प्रत्यासत्त्यविशेषात् अभावग्राहकसामग्र्यविच्छेदाच्च[2] । न[3] चाभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्तस्य च कादाचित्कत्वेनाभावग्रहस्यापि कादाचित्कत्वात् प्रतियोगि- 10
ज्ञानाभावकालेऽभावज्ञानान्तर्गतभावपदार्थग्रहस्यावसरो लभ्यत इति वाच्यम्, प्रत्यक्षस्य प्रतियोग्यादिस्मरणानपेक्षत्वात्, तस्य च स्मृत्यपेक्षायामपूर्वार्थसाक्षात्कारित्वविरोधात् । न च क्वचिद्भावप्रत्यक्षं स्मरणनिरपेक्षं योगिप्रत्यक्षवत् । क्वचित्स्मरणापेक्षं सुखादिसाधनार्थव्यवसायवत् । तथा क्वचिदभावप्रत्यक्षं स्मरणनिरपेक्षं योगिनोऽभावप्रत्यक्षवत् क्वचित्प्रतिषेध्यस्मरणापेक्षं तथैव प्रतीतेरिति वाच्यम्, स्मरणापेक्षस्य विकल्पज्ञानस्य प्रत्यक्षत्वविरोधादनु- 15
मानादिवत् । तस्य स्मरणापेक्षत्वेऽनवस्थाप्रसङ्गाच्च[4] । ततो नाभावः प्रत्यक्षविषयः[5] । सकलशक्तिविरहरूपस्य निरुपाख्यस्याधिकरणात्सर्वथाभिन्नस्याभावस्य स्वभावकार्यादेरभावान्नानुमानिकत्वं, सस्वभावत्वे भावत्वप्रसङ्गात् । अनुपलब्ध्यापि न तद्व्यवस्था तया तस्यासिद्धताया एव व्यवस्थापनात्, न च भावानामनुपलब्ध्या तत्प्रमितिरिति वाच्यम्, ततो भावान्तरस्वभावस्यैवाभावस्यावभासनादिति ॥ 20

---

१. सर्वथाऽभावस्याभेदे हि भावैकान्तनिश्चयस्स्यात्, अस्तित्वमेवेति निश्चयात् तथाऽभ्युपगम्यमाने सर्वेषामेवाभावानामपह्नवस्स्यात् तथा च सति सर्वेषां सर्वात्मकत्वं अनादित्वमनन्तत्वं च स्यादित्यपि बोध्यम् ॥ २. अभावग्राहकसामग्र्यविच्छेदादनन्तघटपटाद्यभावग्रहणे भावग्रहो न भवेदेवेति भावः ॥ ३. ननु केवलाभावप्रत्यक्षाभ्युपगमे भवेदयं दोषः, स एव च नास्ति, अभावज्ञाने प्रतियोगिज्ञानस्यापि हेतुत्वात्तस्य च कादाचित्कत्वादित्याशंकते न चेति ॥ ४. स्मृतेः पूर्वानुभवस्य तस्याप्यपरस्मरणस्य तस्याप्यपरपूर्वानुभवस्यापेक्षणादनवस्था । सुदूरमपि गत्वा कस्यचिदनुभवस्य स्मृतिनिरपेक्षत्वे प्रकृतानुभवस्यापि स्मृतिसापेक्षत्वकल्पनावैयर्थ्यादिति भावः ॥ ५. न च स्मृतित्वेन स्मृतिजन्यत्वस्य प्रत्यक्षाभावव्याप्यत्वेऽपि विशेषणज्ञानत्वेन तज्जन्यताया अतथात्वान्नायं दोष इति वाच्यं विशिष्टज्ञानत्वावच्छिन्नं प्रति विशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति वा विशेषणज्ञानहेतुत्वे मानाभावात्, तद्विशेषणेन्द्रियसन्निकर्षतदसंसर्गाग्रहादिनैव तद्विशिष्टप्रत्यक्षोत्पत्तेः । सुरभि चन्दनमित्यादि ज्ञानं तु प्रत्यभिज्ञानमेवेति ॥

अथ विधिस्वरूपंहेतोः प्रकारान् प्रकाशयति—

**विध्यात्मको हेतुस्साध्याविरुद्धप्रतिषेध्यविरुद्धभेदेन द्विधा, एवं निषेधात्मकोऽपि ॥**

**विध्यात्मक इति ।** एवमेव प्रतिषेधरूपहेतावपीत्याहैवमिति । अत्रेदमवसेयम् यथा
5 साध्याविरुद्धो विध्यात्मको हेतुर्विधिसाधकः, प्रतिषेध्यविरुद्धो विधिहेतुः प्रतिषेधसाधकः, तथा प्रतिषेध्येनाविरुद्धो निषेधात्मको हेतुः प्रतिषेधसाधकः, साध्यविरुद्धनिषेधात्मको हेतुर्विधिसाधक इति ॥

तत्र साध्याविरुद्धविधिसाधकविधिस्वरूपहेतून् पूर्वोदितषड्विधानुदाहरति—

**अत्र शब्दः परिणामी प्रयत्नानन्तरीयकत्वादिति व्याप्यो विधि-
10 हेतुः ॥**

**तत्रेति ।** व्याप्याविरुद्धकार्याविरुद्धकारणाविरुद्धपूर्वचराविरुद्धोत्तरचराविरुद्धसहचराविरुद्धभेदेष्वित्यर्थः, अस्य व्याप्यो विधिहेतुरित्यनेन सम्बन्धः । शब्दः परिणामीति प्रतिज्ञायां शब्दो धर्मी साध्यधर्मः परिणामः प्रयत्नानन्तरीयकत्वं हेतुः, प्रयत्नश्चेतनव्यापारस्तदनन्तरसम्भूतत्वं तदर्थः, यत्र यत्र प्रयत्नानन्तरीयकत्वं तत्र तत्र परिणामित्वं यथा
15 घटादिरित्युदाहरणम्, प्रयत्नानन्तरीयकश्च शब्द इत्युपनयः, तस्मादयं परिणामीतिनिगमनमिति साधर्म्येण पञ्चावयवप्रयोगः, वैधर्म्येण तु यो न परिणामी स न प्रयत्नानन्तरीयकः, यथा वन्ध्यासुतः, इत्युदाहरण एव विशेषो नेतरावयवेषु वैलक्षण्यम् । ननु कार्यादिरूपाणां पञ्चानामपि हेतूनां स्वस्वसाध्येन व्याप्तत्वादविरोधाच्च व्याप्याविरुद्धस्वरूपत्वमेव, व्याप्यत्वाभावे च तेषां साधकत्वानुपपत्तेस्तथा चानेनैव सर्वेषां तेषां गतार्थतया पृथग्विभागो
20 नोचित इति चेन्न साध्यनिरूपितव्याप्तिमत्त्वमात्रेण व्याप्यस्यात्राविवक्षणात् कथञ्चित्साध्येन तादात्म्यपरिणाममापन्नस्य कार्यादिविलक्षणस्य हेतुस्वरूपस्य विवक्षणात् । अस्यैव च स्वभावोपलब्धिरिति नामान्तरम् । प्रयत्नानन्तरीयकत्वं हि साध्यधर्मस्य परिणतिमत्त्वादेः कथञ्चिदपृथग्भूतं स्वरूपम् । न चैवं स्वभावभूतधर्मस्य व्याप्यस्य हेतुत्वे हेतोर्निश्चये

१. ननु निषेधात्मकहेतोः कथं द्विविधत्वस्यातिदेशः न तावत्साध्याविरुद्धत्वप्रतिषेध्यविरुद्धत्वाभ्यां, अग्रिमोदाहरणानुपपत्तेरिति पर्यनुयोगे त्वाहात्रेदमिति ॥ २. पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणतिशून्यस्वरूपे सर्वथा नित्यत्वे शब्दस्य प्रयत्नानन्तरीयकत्वानुपपत्तेः प्रयत्नानन्तरीयकत्वं परिणतिमत्त्वेन व्याप्तं विज्ञेयम् ॥

तदभिन्नस्य साध्यस्यापि निश्चयेन सिद्धसाधनत्वापत्तिर्हेतोरनिश्चये च न तेन साध्यसिद्धिरज्ञातस्य ज्ञापकत्वासम्भवादिति वाच्यम्, अनेकस्वभावस्य शब्दादिवस्तुनो निश्चितेऽपि प्रयत्नानन्तरीयकत्वादौ स्वभावभूते साधनधर्मे परिणामित्वादिसाध्यधर्मनिश्चयनियमस्याभावात्, निश्चितानिश्चितात्मकत्वञ्चैकस्य वस्तुनश्चित्राकारैकज्ञानवन्न विरुध्यते, तस्मान्निश्चितेऽपि हेतुधर्मे साध्यधर्मानिश्चयेन तत्प्रतिपत्त्यर्थमनुमानं सफलमेवेति ॥ 5

साध्याविरुद्धकार्यस्वरूपविधिहेतुं निदर्शयति—

**पर्वतो वह्निमान् धूमादिति कार्यात्मकः ॥**

**पर्वत इति ।** अत्र हि वह्नेः कार्यं धूमः, साध्याविरुद्धश्च, वह्निसद्भावे एव धूमस्योत्पत्तेः तदभावे च नियमेन धूमस्य निवर्त्तनात् ननु वह्न्यभावेऽपि धूमो न निवर्त्तते गोपालघटिकादौ वह्न्यभावेऽपि धूमसद्भावप्रतीतेरिति चेन्न धूमस्य ह्यात्मलाभो वह्नौ सत्येव, तत्कथं 10 गोपालघटिकादावग्न्यभावे धूमसद्भावाशङ्कापि, न च तर्हि पर्वतादाविव तत्रापि धूमोऽग्निं गमयेदिति वाच्यम्, पर्वतादिधूमादस्य वैलक्षण्यात्, वह्निसमानसमयसत्ताको हि पर्वतादिधूमो बहलः पताकायमानस्वरूपोऽनुभूयते, न च गोपालघटिकादिधूमस्तथेति ॥

साध्याविरुद्धकारणरूपविधिहेतुं दृष्टान्तयति—

**भविष्यति वृष्टिर्विलक्षणमेघोपलम्भादिति कारणात्मकः ॥** 15

**भविष्यतीति ।** विलक्षणपदेन सातिशयोन्नतत्वादिधर्मोपेतत्वं विवक्षितं तस्यैव वृष्टिकारणत्वात् । ननु कारणं न कार्यस्य गमकं, तेन सहाविनाभावाभावात्, प्रतिबन्धकेन विनाशेन वा कार्याभावात्, अवश्यं कारणानि कार्यवन्तीत्यनियमात् । नवा कारणविशेषस्य गमकत्वं, विशेषस्य निश्चेतुमशक्यत्वात्, प्रचण्डानामपि तडित्वतां वर्षमकृत्वैवोपरमदर्शनादिति चेन्मैवम्, आस्वाद्यमानफलनिष्ठरसेन तज्जनिकां सामग्रीमनुमाय तया रूपानुमानस्य सौगतेन 20 त्वयाऽप्यभ्युपगमात् । प्राक्तनो हि रूपक्षणः सजातीयं रूपक्षणान्तरलक्षणं कार्यं करोतीत्येवं रूपानुमानमिच्छद्भिरिष्टमेव किञ्चित्कारणं लिङ्गतया, प्राक्तनस्य रूपक्षणस्य सजातीयरूपक्षणान्तराव्यभिचारात् । अन्यथा रससमानकालभाविनो रूपस्य प्रतिपत्त्यनुपपत्तेः । कारण-

१ नात्यन्तिमकारणस्य व्याप्तत्वं, तथा सति व्याप्तिस्मरणकाल एव कार्यस्य प्रत्यक्षतयाऽनुमानवैकल्यं स्यादित्यपि बोध्यम् ॥ २ तथा च विशिष्टं कारणमेव लिङ्गम्, विशिष्टता च समर्थतैव, सा च वैकल्येन प्रतिबन्धेन वा न प्राप्यते यादृशञ्च सामर्थ्यं यत्र न प्रतिबद्धं तादृशं कारणं लिङ्गं भवितुमर्हति, तन्निश्चयश्च निपुणानां प्रमातॄणां सम्भवत्येव, यत्र कार्यस्य व्यभिचारस्तत्रापि न कारणस्य दोषः किन्तु प्रमातृदोष एव, अन्यथा सकलव्यवहारविलोपप्रसङ्गः स्यादिति भावः ॥

त्वमपि नानुकूलत्वमात्रं किन्तु कार्याविनाभावित्वेन निश्चितं विशिष्टमेव, यत्र हि सामर्थ्याप्रतिबन्धः कारणान्तरावैकल्यञ्च निश्चीयते तस्यैव हेतुत्वमन्यथा तृप्त्याद्यर्थं भोजनादावप्यप्रवृत्तेर्निखिलव्यवहारोच्छेदः प्रसज्येतेति ॥

पूर्वचरं साध्याविरुद्धं विधिहेतुमादर्शयति--

5 **उदेष्यति शकटं कृत्तिकोदयादिति पूर्वचरः ॥**

**उदेष्यतीति** । कृत्तिकोदयानन्तरं मुहूर्त्तान्तेऽवश्यं शकटोदयो जायत इति पूर्वचरः कृत्तिकोदयश्शकटोदयं गमयतीति भावः । ननु कृत्तिकोदयस्य शकटोदयपूर्वभावित्वेनायं कारणाविरुद्धविधिहेतुरेव न ततः पृथग्भूत इति चेन्न, पूर्वभावित्वमात्रस्य कारणत्वाप्रयोजकत्वात् किन्तु कार्यस्वरूपप्राप्तौ हेतूनामेव पूर्ववर्त्तिनामन्वयव्यतिरेकतः कारणत्वावधारणात्,
10 न ह्यत्र कृत्तिकोदयाच्छकटोदयस्य स्वरूपप्राप्तिरस्ति, अव्यवहिततदुत्तरं तदुदयाभावात् कालविशेषापेक्षया तस्मात्तदुदयत्वेऽभ्युपगम्यमाने चाश्विन्युदयादीनामपि हेतुताप्रसङ्गात् । ततः कृत्तिकोदयः पूर्वचर एव न कारणमिति तन्निदर्शनं युक्तमेव, तथा च प्रयोगः, यस्मादनन्तरं यन्नास्ति न तस्य तेनोत्पत्तिः, यथा भविष्यच्छङ्खचक्रवर्त्तिकालेऽसतो रावणादेः, नास्ति च शकटोदयाद्यनन्तरं कृत्तिकोदयादिकम् । न चैवं व्यवहितयोः कार्यकारणभावा-
15 भावे जाग्रत्संवेदनसुप्तोत्थितभाविसंवेदनयोः मरणारिष्टयोः कार्यकारणभावो न स्यादिति वाच्यम्, इष्टापत्तेः व्यवहितत्वेन तयोर्व्यापारपराङ्मुखत्वात्, अन्वयव्यतिरेकाभ्यां व्यापारसापेक्षयोरेव कार्यकारणभावावधारणात्, दृष्टञ्च व्यापारविशिष्टस्यैव घटं प्रति कुलालस्य कारणत्वं, न चात्र व्यापारपरिकल्पनं युक्तमतिप्रसङ्गात्, परम्परया व्यवहितानामन्येषां कारणत्वप्रसङ्गात् । तस्माच्छरीरनिर्वर्त्तकादृष्टादिकारणकलापादरिष्टकरतलरेखादयो निष्पन्ना
20 भाविनो मरणादेरनुमापका इति प्रतिपत्तव्यम् । जाग्रद्दशाज्ञानं तु न सुप्तोत्थितज्ञानस्य हेतुः, ज्ञानादभिन्नस्यात्मनः कालत्रयस्थायित्वात्सर्वथा चैतन्यविच्छेदस्य कदाप्यसम्भवादिति ॥

साध्याविरुद्धमुत्तरचरं विधिहेतुमाह---

**उदिता चित्रा स्वात्युदयादित्युत्तरचरः ॥**

**उदितेति** । स्वात्युदयो हि चित्रोदयस्योत्तरचरः ततस्तं गमयति, उत्तरचरस्य तत्का-

१. घटं प्रति कालाकाशदिगादीनां कुलालपितृपितामहादीनामपि पूर्ववृत्तितया कारणत्वप्रसङ्गः । अव्यवहितोत्तरत्वप्रवेशे कृत्तिकोदयस्य कारणत्ववर्णनमनुचितं भवेत् मुहूर्त्तादिकालविशेषनिवेशे स्मृतिं प्रत्यनुभवस्य कारणत्वं न स्यात् भरण्युदयस्यापि कारणत्वप्राप्तेरिति भावः ॥

येत्वाभावेन कार्याविरुद्धेनागतार्थत्वात्पृथगुक्तिः, निश्चितव्याप्तिमत्त्वाच्चानयोर्ज्ञाप्यज्ञापकभाव इति भावः । नक्षत्राणां पूर्वोत्तरचरत्वे निबन्धनञ्च नानाप्रकारः सकलप्राणिसन्दोहसम्बन्धी सुखदुःखसम्बन्ध्यदृष्टविशेषस्तथास्वभाव एव वा ॥

अथ षष्ठं साध्याविरुद्धं सहचरं विधिहेतुं दर्शयति—

**रूपवान् रसादिति सहचर इतीमान्यविरुद्धविधिहेतोरुदाहरणानि ॥** 5

**रूपवानिति** । रसो हि नियमेन रूपसहचरितोऽतस्तदभावेऽनुपपद्यमानस्तद्गमयतीति-भावः, एतेषूदाहरणेषु भावरूपानेव परिणामादीन् प्रयत्नानन्तरीयकत्वादयो हेतवो भावरूपा अविरुद्धा एव साधयन्तीति विधिसाधकविधिरूपाः साध्याविरुद्धोपलब्धय इत्यपरनामान इत्याशयेनाहेतीमानीति । अत्र रूपरसयोस्तुल्यकालभावित्वेन सव्येतरगोविषाणयोरिव न कार्यकारणभावः परस्परपरिहारेणावस्थानान्न तयोस्तादात्म्यं, तस्मात्पूर्वोक्तेषु पञ्चविधेषु 10 हेतुषु नास्य समावेशस्सम्भवतीति पृथगुक्तिः, एवमविरुद्धकार्यकार्यादेः कारणकारणादेः पूर्वपूर्वचरादेरुत्तरोत्तरचरादेश्च कार्यकारणपूर्वचरोत्तरचरभेदैरेव सङ्ग्रहान्नाधिक्यशङ्का कार्येति ॥

अथ विधिहेतुर्विधिसाधक एवेति नियमप्रतिषेधाय प्रतिषेधसाधकत्वमुपवर्णयितुं प्रथमं तत्प्रभेदानाह—

**विरुद्धविधिहेतुः प्रतिषेधसाधकः प्रतिषेध्यस्वभावविरुद्धतद्व्याप्यादि भेदेन सप्तप्रकारः ॥** 15

**विरुद्धविधिहेतुरिति** । प्रतिषेध्येन विरुद्धो विधिहेतुरित्यर्थः, अस्य विभागप्रकारमाह प्रतिषेध्यस्वभावविरुद्धेति, अयमेको भेदः, तद्व्याप्येति, प्रतिषेध्यविरुद्धव्याप्येत्यर्थः, आदिना कार्यकारणपूर्वचरोत्तरचरसहचराणां ग्रहणम् तथा च प्रतिषेध्यस्वभावविरुद्ध-विरुद्धव्याप्यविरुद्धकार्यविरुद्धकारणविरुद्धपूर्वचरविरुद्धोत्तरचरविरुद्धसहचरभेदेन सप्तविध 20 इति फलितार्थः ॥

अथ प्रतिषेध्यस्वभावविरुद्धोपलम्भरूपं विधिहेतुं निदर्शयति—

**नास्त्येव सर्वथैकान्तोऽनेकान्तोपलम्भादिति प्रतिषेध्यस्य यस्स्वभावस्सर्वथैकान्तत्वं तेन साक्षाद्विरुद्धो विधिहेतुः ॥**

**नास्त्येवेति** । सर्वथैकान्तोऽत्र प्रतिषेध्यस्तस्य स्वभावेन सर्वथैकान्तत्वेन साक्षाद्विरु- 25 द्धस्य कथञ्चित्सदसदाद्यात्मकत्वस्वरूपस्यानेकान्तस्योपलम्भो विध्यात्मको हेतुरित्याशयेनाह

प्रतिषेध्यस्येति । अत्रोपलम्भपदोपादानान्निषेधमात्रस्यानुपलम्भादेव सिद्धेर्भेदोऽयमनुपलब्धावेवान्तर्भाव्य इति मतमपास्तम्, न चोष्णशीतस्पर्शयोरिव सर्वथैकान्तानेकान्तयोर्विरोधस्य प्रथममनुपलब्ध्या प्रतिपद्यमानत्वेन तन्मूलकस्यास्य हेतोरनुपलब्धिरूपत्वमेव युक्तमिति वाच्यं यन्मूलं यत्तस्य तद्रूपत्वेऽनुमानस्यापि प्रत्यक्षत्वप्रसङ्गात्, पर्वतादौ हि धूमे
5 प्रत्यक्षेणावगते पश्चात्तेन वह्न्यनुमानं भवत्यतः प्रत्यक्षमूलत्वादनुमानमपि प्रत्यक्षं स्यादिति ॥

प्रतिषेध्यविरुद्धव्याप्यं विधिहेतुं निदर्शयति—

**नास्य नवतत्त्वनिश्चयस्तत्संशयादिति प्रतिषेध्यस्य नवतत्त्वनिश्चयस्य विरुद्धेनानिश्चयेन व्याप्यः ॥**

**नास्येति ।** नवतत्त्वनिश्चयोऽत्र प्रतिषेध्यस्तद्विरुद्धानिश्चयत्वव्याप्यत्वात्तत्संशयस्य विरु-
10 द्धव्याप्यत्वमित्याह प्रतिषेध्यस्येति । अनिश्चयो ह्यनध्यवसायादौ संदेहमन्तरेणापि वर्त्तते, संदेहस्तु नानिश्चयमन्तरेण कदापि सम्भवतीत्यनिश्चयसंशययोर्व्याप्यव्यापकभावोऽवसेयः ॥

प्रतिषेध्यविरुद्धकार्यस्य विधिहेतोर्दृष्टान्तमाह—

**नास्त्यत्र शीतं धूमादिति प्रतिषेध्यशीतविरुद्धवह्निकार्यरूपः ॥**

**नास्त्यत्रेति ।** अत्र प्रतिषेध्यश्शीतस्पर्शस्तद्विरुद्धो वह्निस्तत्कार्यत्वाद्धूमस्य विरुद्ध-
15 कार्यत्वमित्यभिप्रायेणाह प्रतिषेध्येति ॥

प्रतिषेध्यविरुद्धकारणं लिङ्गं विध्यात्मकमाह—

**न देवदत्ते सुखमस्ति हृदयशल्यादिति प्रतिषेध्यसुखविरुद्धदुःखकारणरूपः ॥**

**नेति ।** सुखं ह्यत्र प्रतिषेध्यं तद्विरुद्धं दुःखं तत्कारणञ्च हृदयशल्यमिति प्रतिषेध्यविरुद्ध
20 कारणं लिङ्गमिदमित्याह प्रतिषेध्येति ॥

प्रतिषेध्यविरुद्धपूर्वचरविरुद्धोत्तरचरविरुद्धसहचरानाह—

---

१. न च स्वभावविरुद्धोपलब्धिरियं पृथक् न वाच्या, स्वभावानुपलब्धावन्तर्भावसम्भवात्, निषेधमात्रस्यानुपलम्भगम्यत्वादिति वाच्यम्, अत्रानुपलब्धेरश्रवणात्, न चानुपलम्भमूलत्वादनुपलब्धिरूपत्वं, प्रथमं सर्वथैकान्तानेकान्तयोश्शीतोष्णस्पर्शयोरिव विरोधं स्वभावानुपलब्ध्या निश्चित्यैवानुमानस्यास्य प्रवृत्तेरिति वाच्यम्, अनुमानस्यापि प्रत्यक्षत्वापत्तेः प्रत्यक्षतो वह्निधूमयोस्साहचर्यं दृष्ट्वा धूमेनानुमानप्रवृत्तेरिति ॥

**मुहूर्त्तान्ते नोदेष्यति शकटं रेवत्युदयादिति प्रतिषेध्यशकटोदयविरुद्धाश्विन्युदयपूर्वचरः। मुहूर्त्तात्प्राङ्नोदगाद्भरणिः पुष्योदयादिति प्रतिषेध्यभरण्युदयविरुद्धपुनर्वसूदयोत्तरचरः। नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनादिति प्रतिषेध्यमिथ्याज्ञानविरुद्धसम्यग्ज्ञानसहचर इति ॥**

**मुहूर्त्तान्त इति** । अत्र हि प्रतिषेध्यश्शकटोदयस्तद्विरुद्धोऽश्विन्युदयस्तत्पूर्वचरो रेवत्युदय इति विरुद्धपूर्वचरोऽयं हेतुरित्याह प्रतिषेध्येति । विरुद्धोत्तरचरहेतुमाह मुहूर्त्तादिति । स्पष्टम् । विरुद्धसहचरमाह नास्त्यस्येति, स्पष्टम् । एते हेतवस्साक्षात्प्रतिषेध्यविरुद्धत्वमाश्रित्याभिहिताः परम्परया विरुद्धत्वमाश्रित्य त्वनेकप्रकारा भवन्तीति ते विस्तरभिया नोक्ताः । इति समाप्तो विधिहेतुप्रपञ्चः ॥ 5

अथ प्रतिषेध्याविरुद्धवस्तुनोऽनुपलब्धिरूपस्य प्रतिषेधहेतोर्भेदानाचष्टे— 10

**अविरुद्धनिषेधात्मको हेतुः प्रतिषेधसाधने स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचरभेदेन सप्तधा ॥**

**अविरुद्धेति** । अयं हेतुः प्रतिषेधसाधकः प्रतिषेध्यार्थाविरुद्धपदार्थानुपलम्भरूपत्वात् । स्वभावेति, स्वभावानुपलब्धिव्यापकानुपलब्धिकार्यानुपलब्धिकारणानुपलब्धिपूर्वचरानुपलब्ध्युत्तरचरानुपलब्धिसहचरानुपलब्धिभेदेन सप्तप्रकार इति भावः ॥ 15

प्रतिषेध्यपदार्थप्रतिषेधज्ञापकं स्वभावानुलब्धिरूपं प्रतिषेधहेतुं निदर्शयति—

**भूतलेऽत्र कुम्भो नास्ति दृश्यत्वे सति तत्स्वभावानुपलम्भादित्यविरुद्धस्वभावानुपलब्धिरूपो निषेधात्मको हेतुः ॥**

**भूतल इति** । भूतले दृश्यस्य कुम्भस्वभावस्यानुपलम्भात्कुम्भप्रतिषेधस्सिद्ध्यतीति भावः । पिशाचादिभिर्व्यभिचारवारणाय तत्स्वरूपे दृश्यत्वविशेषणमुपात्तं, पिशाचादीनां स्वभावो हि न जातुचिद्दृश्यः तस्मात्ते न नास्तित्वेनावगन्तुं शक्या इति भावः । ननु यो यत्र नास्ति स कथं दृश्यो यदि पुनर्दृश्यस्तर्हि कथं तस्य नास्तित्वमिति चेन्न निषेध्यस्य सर्वत्रारोपविषयत्वात्, एतद्रूपं ह्यारोप्य निषिध्यते, यद्यत्र कुम्भः स्यात्तर्ह्युपलभ्येत नोपलभ्यतेऽतो नास्तीति, न चादृश्यस्यापि पिशाचादेर्दृश्यरूपतयाऽऽरोप्य प्रतिषेधः किमिति कर्तुं न शक्य इति वाच्यम्, तस्यारोपायोग्यत्वात् तद्योग्यस्यैवारोपात्, यस्य सत्त्वे नियमेनोपलम्भस्स एवारोपयोग्यो न पिशाचादिः, सत्त्वेऽपि तस्य नियमेनोपलम्भाभावात्, उपलम्भकारण- 20 25

साकल्यवतो घटादेस्तु नियमेनोपलम्भयोग्यत्वं गम्यते उपलम्भकारणसाकल्यनिश्चयश्च घटस्यैकज्ञानसंसर्गिणि प्रदेशादावुपलभ्यमानत्वात् घटप्रदेशयोरुपलम्भकारणस्य तुल्यत्वात् । यद्देशवृत्तित्वेन यस्य कल्पना स एव तेनैकज्ञानसंसर्गी न देशान्तरस्थः, एकेन्द्रियग्राह्यं हि लोचनादिप्रणिधानाभिमुखवस्तुद्वयमन्योन्यापेक्षमेकज्ञानसंसर्गीत्युच्यते तयोर्हि विद्यमानयोर्नैकनियताभावप्रतिपत्तिर्योग्यताया द्वयोरप्यविशिष्टत्वात । एवञ्च कल्पितस्यैकज्ञानसंसर्गित्वे सिद्धे एकज्ञानसंसर्गिपदार्थान्तरोपलम्भे योग्यतया सम्भावितस्य घटस्य दृश्यस्यानुपलम्भस्सिद्ध्यति ॥

व्यापकानुपलब्धिकार्यानुपलब्धिकारणानुपलब्धीः दर्शयति—

**अत्र शिंशपा नास्ति वृक्षाभावादित्यविरुद्धव्यापकानुपलब्धिर्नास्त्यत्र सामर्थ्यवद्बीजमङ्कुरानवलोकनादित्यविरुद्धकार्यानुपलब्धिः । नास्त्यत्र धूमो वह्न्यभावादित्यविरुद्धकारणानुपलब्धिः ॥**

अत्रेति । प्रतिषेध्यशिंशपाऽविरुद्धव्यापकवृक्षानुपलब्ध्या शिंशपाप्रतिषेधः क्रियत इति भावः । कार्यानुपलब्धिं दर्शयति नास्त्यत्रेति । अङ्कुरादेरनुपलम्भे सत्यपि क्वचिद् बीजदर्शनाद्व्यभिचारवारणाय सामर्थ्यवदिति, तथा चाङ्कुरानुपलम्भे बीजमात्राभावो न प्रयोजकः, किन्तु सामर्थ्यवद्बीजाभाव इति न व्यभिचार इति भावः । कारणानुपलब्धिमाह नास्तीति स्पष्टम् ॥

अथ पूर्वचरोत्तरचरसहचरानुपलब्धीर्निदर्शयति—

**न भविष्यति मुहूर्त्तान्ते शकटं कृत्तिकोदयानुपलब्धेरित्यविरुद्धपूर्वचरानुपलब्धिः । नोदगाद्भरणिर्मुहूर्त्तात्प्राक्कृत्तिकोदयानुपलम्भादित्यविरुद्धोत्तरचरानुपलब्धिः । नास्त्यस्य सम्यग्ज्ञानं सम्यग्दर्शनानुपलम्भादित्यविरुद्धसहचरानुपलब्धिः ॥**

नेति । अत्र प्रतिषेध्यशकटोदयाविरुद्धपूर्वचरकृत्तिकोदयानुपलम्भरूपोऽयं हेतुः । उत्तरचरानुपलब्धिं दर्शयति नोदगादिति, अत्र प्रतिषेध्यभूतभरण्युदयाविरुद्धोत्तरचरकृत्ति-

१. ननु केवलभूतलस्य प्रत्यक्षत्वे तद्रूपस्य घटाभावस्यापि प्रत्यक्षतया किमर्थं स स्वभावानुपलब्ध्या साध्यत इति चेद्युक्तमुक्तं तथापि यस्सर्वं सर्वत्र विद्यत इति कुमतवासितान्तःकरणः प्रत्यक्षप्रतिपन्नेऽपि घटाद्यभावे भ्राम्यति सोऽनुपलम्भं निमित्तीकृत्य प्रतिपाद्यत इति ॥ २. यद्यपि कारणानुपलब्धेर्व्यापकानुपलब्धिरूपत्वं, कार्यकारणयोः व्याप्यव्यापकभावात्तथापि कार्यानुपलब्धिसाहचर्येण कारणानुपलब्धेरप्युपस्थिते- र्विशेषज्ञानार्थं पृथङ्निर्देशो बोध्यः ॥

कोदयानुपलम्भरूपोऽयं हेतुः । सहचरानुपलब्धिं दृष्टान्तयति नास्त्यस्येति, अत्र प्रतिषेध्य-सम्यग्ज्ञानाविरुद्धसहचरसम्यग्दर्शनानुपलम्भरूपोऽयं हेतुरिति । इमान्यप्युदाहरणानि स्वभावकार्यादीनां साक्षादनुपलम्भरूपहेतुद्वारा दर्शितानि, परम्परानुपलम्भरूपा हेतवोऽन्यत्र विलोकनीयाः ॥

अथ विधिसाधकसाध्यविरुद्धानुपलब्धिरूपं निषेधहेतुं विभजते— 5

**विरुद्धनिषेधात्मको हेतुर्विधिप्रतीतौ कार्यकारणस्वभावव्यापकसहचरभेदेन पञ्चधा ॥**

विरुद्धेति, तथा च विरुद्धकार्यानुपलब्धिविरुद्धकारणानुपलब्धिविरुद्धस्वभावानुपलब्धिविरुद्धव्यापकानुपलब्धिविरुद्धसहचरानुपलब्धिभेदेन पञ्चविधो विधिसाधको निषेधहेतुरिति भावः ॥ 10

तत्र प्रथमद्वितीयतृतीयहेतूनां निदर्शनान्याह—

**अत्र शरीरिणि रोगातिशयो वर्त्तते नीरोगव्यापारानुपलब्धेरिति साध्यविरुद्धारोग्यकार्यव्यापारानुपलब्धिरूपो निषेधहेतुः । अस्त्यस्मिन् जीवे कष्टमिष्टसंयोगाभावादिति साध्यविरुद्धसुखकारणानुपलब्धिः । सर्वं वस्त्वनेकान्तात्मकमेकान्तस्वभावानुपलम्भादिति साध्यविरुद्धस्वभावानुपलब्धिः ॥** 15

अत्रेति । पञ्चविधेषु हेतुष्वित्यर्थः, शेषं स्पष्टम् । विरुद्धकारणानुपलब्धिमाहास्तीति, स्पष्टम् । विरुद्धस्वभावानुपलब्धिमाह सर्वमिति, नेकोऽनेकः, स चासावन्तश्च धर्मोऽनेकान्तस्स एवात्मा स्वरूपं यस्य तदनेकान्तात्मकं तत्त्वं साध्यधर्मः, सर्वमित्यान्तरबाह्यपदार्थसमूहो धर्मी, एकान्तस्वभावस्सदसदाद्यन्यतरात्मकः, तस्यानुपलम्भादिति हेतुः । अत्र साध्येनानेकान्तात्मकत्वेन विरुद्धो यस्स्वभावस्सदसदाद्यन्यतरस्स्वभावः तस्य प्रमाणमात्रेणानुपलम्भरूपोऽयं हेतुः । प्रमाणैर्हि स्वरूपेण सदात्मकाः पररूपेणासदात्मकास्सन्तस्सामान्यविशेषात्मका नित्यत्वानित्यत्वाद्यनेकधर्माण एव पदार्थाः प्रतीयन्ते न केवलं सद्रूपा असद्रूपा वा सामान्यस्वरूपा विशेषस्वरूपा वा नित्या अनित्या वा पदार्थास्तेभ्यो विरुद्धस्वभावानुपलब्ध्याऽनेकान्तात्मकत्वसिद्धिरिति ॥ 20 25

चतुर्थं पञ्चमञ्च हेतुमाह—

**मार्पितस्वपररूपाद्यवच्छिन्नास्तित्वनास्तित्वोभयधर्मवानिति बोधः ॥**

**स्यादस्तीति ।** मलयगिरिपादाभ्युपगमापेक्षयात्र शाब्दबोध उक्तो व्याख्यातप्रायश्च । प्रथमद्वितीयचतुर्थवाक्यानामेव सकलादेशत्वं निरवयवद्रव्यविषयत्वाच्छेषाणान्तु सावयवद्रव्यविषयत्वाद्विकलादेशरूपत्वं देशभेदं विनैकत्र क्रमेणापि सदसत्त्वविवक्षायास्सम्प्रदायविरुद्धत्वा-
5 दिति सम्मत्याद्यनुसारेण तु घटस्यैकदेशः अस्तित्वेऽवच्छेदकतयाऽपरश्च देशो नास्तित्वस्यावच्छेदकत्वेन विवक्षितस्तदा देशाभेदद्वारा घटोऽप्यस्ति नास्ति च भवति, अक्षिपाणिगतकाणत्वकुण्टत्वापेक्षया यथा देवदत्तः काणः कुण्टः । अन्यथा क्रमेणाप्येकत्र सदसत्त्वविवक्षाया अनुदयेन भङ्गविलोपः प्रसज्येत । देशोऽप्यवयवो धर्मो वा, अवयवावयविनोर्धर्मधर्मिणोश्च कथञ्चिदभेदेनावयवादिधर्मैरपि अवयव्यादीनां तथा व्यपदेशस्सुघट एव, उभयप्रधानावयवाभेदेना-
10 स्तित्वं नास्तित्वञ्चात्रार्प्यते, तथा चास्माद्वाक्यात्स्वाश्रयसमवायित्वरूपपरम्परासम्बन्धावच्छिन्नास्तित्वनास्तित्वरूपधर्मद्वयप्रकारतानिरूपितैकविशेष्यताशालिबोधो भवति । इदञ्चौपादानिकबोधापेक्षया, अन्यथा घटपदस्य देशपरस्याऽऽवृत्त्या प्रकारताद्वयनिरूपितविशेष्यताद्वयशाल्येव बोधस्स्यात् । न च प्रकारभेदेन सप्तभङ्गीभेदश्शास्त्रसिद्धः प्रकारश्च विधेयधर्म उद्देश्यतावच्छेदकधर्मो वेत्यत्र न कश्चिद्विशेषः, अत एव शुद्धघटादिधर्मिकसप्तभङ्ग्यपेक्षया नीलघटादिधर्मिक-
15 सप्तभङ्ग्या अविगानेन भेदस्तथा च प्रकृते धर्मितावच्छेदकस्यावयवस्य धर्मान्तरस्य वा भेदात्सप्तभङ्गीभेदप्रसङ्ग एकधर्मावच्छिन्नत्वघटितत्वात्सप्तभङ्ग्या इति वाच्यम्, तत्तद्धर्मितावच्छेदकसमनियतधर्मावच्छिन्नविशेष्यतास्थले सप्तभङ्गीभेदाभावात्, अन्यथा कम्बुग्रीवादिमान् स्यादस्तीत्यादितोऽपि घटविशेष्यकसप्तभङ्गीभेदापत्तेरिति । तादृशे घट इति, प्रकृतेतरसकलधर्मात्मके घट इत्यर्थः । क्रमार्पितेति, क्रमिकशाब्दबोधद्वयेच्छाविषयेत्यर्थः । न च क्रमबलादुभय-

१. तत्र देशो नाम सकलस्य वस्तुनो बुद्धिच्छेदविभक्तोऽवयवः । विकलादेश इत्यादेशे वस्तुनो वैकल्यञ्च स्वेन तत्त्वेनाप्रविभक्तस्यापि विविक्त गुणादिरूपं स्वरूपेणोपरञ्जकमपेक्ष्य परिकल्पितमंशभेदं कृत्वाऽनेकान्तात्मकैकत्वव्यवस्थायां समुदायात्मकमात्मरूपमभ्युपगम्याभिधानम् । अनेकधर्मस्वभावमेकं हि वस्तु, दृष्टश्चाभिन्नस्याप्यात्मनो भिन्नो गुणो भेदकः, यथा पटुद्रवान् पटुरासीत् एषमस्तु पटुतरोऽन्य एवाभिसंवृत्त इति, अत्र हि पटुत्वातिशयस्सामान्यपाटवाद्गुणादन्यः, स च वस्तुनो भेदं कल्पयति, प्रयोजनार्थिना तथाऽऽश्रितत्वात्, तस्मात्ते गुणास्तस्यारम्भकत्वाद् भागा वस्त्वंशमनुभवन्ति, अनेकानेकस्वरूपत्वादात्मादिवस्तुनः, पुरुषस्येव पाण्यादयः, ते च क्रमेण वृत्ताः, क्रमयौगपद्याभ्याञ्च, तत्र तृतीयेऽस्मिन् भङ्गे क्रमेण वृत्ताः, द्रव्यार्थसामान्येन तद्विशेषेण वा पर्यायसामान्येन तद्विशेषेण वा वस्तूच्यते यथा आत्मा चैतन्यसामान्येनास्ति चैतन्यविशेषविवक्षायां वा एकोपयोगत्वादस्ति, पर्यायसामान्यात् अचैतन्येन नास्ति घटोपयोगकाले वा पटोपयोगेन नास्ति, चैतन्येन तद्विशेषेण वर्त्तमान एव तदभावेन तद्विशेषाभावेन वा न वर्त्तत इत्युभयाधीन आत्मेति तृतीयवाक्यतात्पर्यम् । एवञ्च सङ्ग्रहव्यवहाराभिप्रायात् त्रयस्सकलादेशाः चत्वारस्तु ऋजुसूत्रशब्दसमभिरूढैवंभूतनयाभिप्रायादिति तत्त्वार्थभाष्यटीकाकाराः ॥

मुख्यविशेष्यताकबोधस्यार्थसिद्धत्वेनाद्यभङ्गद्वयानतिरेक इति वाच्यं क्रमगर्भोभयप्राधान्यबोधकत्वाभिप्रायेणोभयपदप्रयोगात्, तत्रैकत्र द्वयमिति विषयताशालिनो धर्मद्वयप्रकारतानिरूपितैकविशेष्यतानिरूपकस्य बोधान्तरस्यानुभविकत्वात्, वस्तुत इच्छाविशेषरूपस्य क्रमार्पितत्वस्य भङ्गप्रयोजकत्वान्न भङ्गे सत्त्वासत्त्वोभयनिष्ठविषयतावच्छेदकत्वं स्वपरद्रव्यादीनामेव तत्रावच्छेदकत्वात् तथा च चालनीन्यायेन स्वद्रव्यपरद्रव्यादिचतुष्टयावच्छिन्नं 5 सत्त्वासत्त्वोभयमस्य भङ्गस्य विषय इत्याशयेन स्वपररूपाद्यवच्छिन्नेत्युक्तम्। वाक्यार्थं निगमयति, तथा चेति, तादृशो घट इति प्रकृतेनग्मकलधर्मात्मको घट इत्यर्थः, क्रमार्पितत्वस्योभयधर्मावच्छेदकत्वं यथाश्रुताभिप्रायेण, जिज्ञासाया भङ्गीयविषयतानवच्छेदकत्वाभिप्रायेण तु स्वपररूपादीति, शिष्टं पूर्ववद्व्याख्यम् ॥

चतुर्थभङ्गवाक्यार्थमाह— 10

**स्यादवक्तव्य एव घट इति चतुर्थं वाक्यं युगपत्स्वपररूपादीनामपेक्षणे वस्तु न केनापि शब्देन वाच्यमिति बोधयति, तथा च तादृशो घटः सत्त्वादिरूपेण वक्तव्य एव सन् युगपत्प्रधानभूतसत्त्वासत्त्वोभयरूपेण प्रतियोग्यसमानाधिकरणघटत्वसमानाधिकरणाभावाप्रतियोग्यवक्तव्यत्ववानिति बोधः ॥** 15

स्यादिति। निरवयवद्रव्यविषयकमिदम्। प्राधान्यतो गुणभावतो वा सत्त्वासत्त्वधर्मयोर्युगपत्प्रतिपादने कस्यापि वचसः सामर्थ्याभावेन घटादिकं वस्तु ताभ्यामवक्तव्यं भवतीत्याशयेनाह युगपदिति। एकदैकपदादुभयबोधो जायतामितीच्छाविषयत्वेनेत्यर्थः। स्वपररूपादीनामित्यनेन स्वरूपाद्यवच्छिन्नसत्त्वपररूपाद्यवच्छिन्नासत्त्वे विवक्षिते, समुदितन्यायेन स्वरूपपररूपादीनां सत्त्वासत्त्वनिष्ठविषयतावच्छेदकतया विवक्षण इति वाऽपेक्षण इति 20 पदान्तस्यार्थः, आदिना द्रव्यक्षेत्रकालानां ग्रहणम्। न केनापि शब्देन वाच्यमिति, कस्यापि पदस्य समस्तपदस्य वाक्यस्य वा तथाविधवाच्यवाचकभावाविषयीभूतत्वादिति भावः, एकं हि पदमेकया शक्त्याऽर्थमेकमेव बोधयति शब्दशक्तिस्वाभाव्यात् सदिति पदस्यासद्विषयत्वादसदिति पदस्य सदविषयत्वात्, अन्यथा तदन्यतरप्रयोगसंशयप्रसङ्गात्, नानार्थविषयस्यापि गवादिपदस्य वस्तुनोऽनेकत्वात् सादृश्योपचारादेव हि तस्यैकत्वेन व्यवहारः, 25 इतरथा सर्वस्यैकशब्दवाच्यत्वं स्यात्, प्रत्येकमप्यनेकशब्दप्रयोगवैफल्यमपि प्रसज्येत, तथा च यथा शब्दभेदेनार्थभेदो ध्रुवस्तथाऽर्थभेदादपि शब्दभेदस्सिद्ध एव, अन्यथा वाच्यवाचकनियमव्यवहारो विलीयेत, एवं वाक्यमप्येकं न युगपदनेकार्थविषयं वेदितव्यम्। ननु

शाब्दबोधस्य सङ्केताधीनत्वेन कस्यचिच्छब्दस्य सदसत्त्वयोस्संकेतकरणेन व्याकरणे सदिति संज्ञाशब्देन संकेतबलात् शतृशानचोर्बोधादिव सह सदसत्त्वयोः कथं ततो न बोधो भवेदिति चेन्न तत्रापि प्रत्ययद्वयस्य क्रमेणैवोत्पत्तिर्वाच्यवाचकभेदेन वाचकतारूपशक्तेरपि भेदादनेकार्थशब्दस्थल इव बोध्यभेदे शब्दभेदकल्पनात्, उपचारेण चैकत्वाभिमानात् ।
5 सेनादिशब्दानामपि करितुरगपदातिप्रत्यासत्तिविशेषरूपैकार्थस्यैव बोधकत्वं, एवमेव वन-यूथपङ्क्तिमालादिशब्दा अपि । न च वृक्षाविति पदं वृक्षद्वयस्य वृक्षा इति पदञ्च बहूनां वृक्षाणां कथं बोधकमिति वाच्यं द्वन्द्वापवादैकशेषसमासाभ्युपगन्तृमतेन द्वाभ्यां वृक्षपदाभ्यां वृक्षद्वयस्य बहुभिश्च बहूनां वृक्षाणां बोधात् न तु सकृदेकेन, शिष्टलुप्तशब्दयोस्सारूप्याद्वा-च्यसादृश्याच्चैकत्वोपचारेणैकशब्दप्रयोगोपपत्तेः । तत्रैकशेषसमासानभ्युपगन्तृमतेन तु द्विब-
10 हुवचनान्तो वृक्षशब्दस्स्वभावत एव स्वाभिधेयमर्थं द्वित्वबहुत्वविशिष्टमाचष्टे तथासामर्थ्यात्, अन्यथा शब्दव्यवहारानुपपत्तेः, अनेकनयमयेऽस्मन्मते तु वृक्षौ वृक्षा इत्यतः प्रत्यय-वत्या प्रकृत्या वृक्षत्वतदाश्रयलिङ्गसंख्यादिविषयकक्रमिकोपस्थितिपरिणत एव लिङ्गसंख्यादि-प्रकारको वृक्षविशेष्यकश्शाब्दबोधो जायते तत्र विशेष्यतया वृक्षस्य प्राधान्यं द्वित्वबहुत्व-संख्यादीनान्तु विशेषणतया गौणत्वमिति प्राधान्येनैकार्थवाचकत्वमेवैकपदस्याभिमतम् ।
15 न च पुष्पदन्तादिपदवदत्रापि केनचित्पदेन सदसतोरपि प्राधान्येनोपस्थितिः स्यादिति-वाच्यम्[2], एकयोक्त्या पुष्पदन्तौ दिवाकरनिशाकरा" विति कोशस्वरसादेकोच्चारणान्त-र्भावेण गृहीतनानाशक्तिकपुष्पदन्तादिपदे व्युत्पत्तिवैचित्र्यात्, अत्र पुष्पदन्तपदं चन्द्रे सूर्ये च शक्तमित्याकारशक्तिग्रहः तत्कार्यतावच्छेदकञ्च चन्द्रत्वप्रकारकत्वे सति सूर्यत्वप्रकार-कस्मृतिजननद्वारा तादृशशाब्दत्वम्, चन्द्रत्वसूर्यत्वोभयस्मिन् व्यासज्यवृत्तिरूपमेकं शक्यताव-
20 च्छेदकत्वं, एकत्र चान्यताग्रहे न शक्त्या बोधोऽपि तु लक्षणयेति नैयायिकाः । तथा-विधस्यात्र सहार्पितसत्त्वासत्त्वोभयाश्रयबोधकस्य कस्यापि पदस्याभावादवक्तव्यत्वमेव साधु, तथा जिज्ञासाया बाधितत्वज्ञाने च तथा ज्ञानस्य विपरीतव्युत्पत्त्या जायमानस्याप्यनिष्ट-त्वप्रतिसन्धानान्न तदर्थं कश्चित्प्रामाणिकः पदप्रयोग इति तदाऽवक्तव्यत्वेन ज्ञानस्यैवे-ष्टत्वात्, अत एवैकक्षणे बोधद्वयं जायतामित्यादिस्थलेऽप्यवक्तव्यत्वाभिधानसाम्राज्यं, बाधि-
25 तेच्छाविषयत्वावच्छेदेनावक्तव्यत्वव्यवस्थापनादिति ।

---

१. द्वन्द्वस्य प्रवृत्तिस्त्वेकपदप्रतिपाद्यत्वसामानाधिकरण्येनापरपदप्रतिपाद्यत्वावच्छिन्नभेदे, एकपदजन्य-प्रतिपत्तिविषयितात्वसामानाधिकरण्येनापरपदजन्यप्रतिपत्तिविषयितात्वावच्छिन्नभेदे वा भवति, घटाविन्यादावेक-पदप्रतिपाद्येऽपरपदप्रतिपाद्यत्वावच्छिन्नभेदाद्विशेष्यताभेदेन विषयिताभेदाद्वा तदुपपत्तिः ॥ २. सकृदुच्चरितशब्द-स्सकृदेव प्रधानतयाऽर्थं बोधयतीत्येव नियमात् ।

सत्त्वादिरूपेणेति, आदिनाऽसत्त्वस्य ग्रहः, अवक्तव्य एव घट इत्युक्तौ घटस्य सर्वथाऽवाच्यत्वं प्राप्नोति तथा चास्तित्वादिमुखेनापि घटस्याभिधानं न स्यादेवञ्च प्रथमद्वितीयादिभङ्गभङ्गप्रसङ्ग इति स्यात्पदप्रयोगः क्रियते, तेन च सत्त्वाद्येकैकधर्ममुखेन वाच्यमेव सर्वं वस्तु, युगपत्प्रधानभूतसत्त्वासत्त्वोभयधर्मावच्छिन्नत्वेनावाच्यत्वमित्याशयेन सत्त्वादिरूपेण वक्तव्य एव सन्नित्युक्तम् ॥ 5

अथ पञ्चमभङ्गवाक्यार्थमाह—

**स्यादस्ति चावक्तव्यश्च घट इति पञ्चमवाक्येन स्वद्रव्याद्यपेक्षयाऽस्तित्वविशिष्टो युगपत्स्वपरद्रव्याद्यपेक्षयाऽवक्तव्यत्वविशिष्टो घटो बोध्यते, तथा चाभेदप्राधान्येनाभेदोपचारेण वा सामान्यतोऽनन्तधर्मात्मको घटः प्रतियोग्यसमानाधिकरणघटत्वसमानाधिकरणात्यन्ताभावा- 10 प्रतियोगिस्वद्रव्याद्यवच्छिन्नास्तित्वविशिष्टयुगपत्स्वपरद्रव्याद्यवच्छिन्नसत्त्वासत्त्वोभयविषयकावक्तव्यत्ववानिति बोधः ॥**

स्यादस्ति चेति, विध्यात्मना मुख्यविषयतावच्छिन्ना योऽभयात्मना युगपदवक्तव्यत्वमुख्यविषयता तद्वतो बोधोऽस्य भङ्गस्य फलमित्याशयेनाह–स्वद्रव्याद्यपेक्षयेति, मतान्तरेण तु एको देशो घटस्य धर्मिणोऽस्तित्वे आदिष्टोऽपरश्च देशोऽस्तित्वनास्तित्वप्रकाराभ्यामेक- 15 दैव विवक्षितः, तदा स घटोऽस्ति चावक्तव्यश्च भवति, उक्तोभयधर्माक्रान्तदेशद्वारेण धर्मिणो विवक्षितत्वात् । अत एव प्रथमचतुर्थभङ्गसंयोगेनान्यथासिद्धिव्युदासः, तत्र हि केवलं धर्मविवक्षा, सा च देशाविशेषितद्रव्य एव सम्भवति, अत्र तु देशद्वारा द्रव्य उभयधर्मविवक्षा, एवमग्रेऽपि भाव्यम् । फलितार्थमाह तथा चेति, स्पष्टमन्यत् ॥

षष्ठभङ्गवाक्यार्थमाह— 20

**स्यान्नास्ति चावक्तव्यश्चेति षष्ठं वाक्यं परद्रव्याद्यपेक्षया नास्तित्वविशिष्टं युगपत्प्राधान्येन स्वपरद्रव्याद्यपेक्षयाऽवक्तव्यत्वविशिष्टं घटं प्रतिपादयति । तथा च तादृशो घटः प्रतियोग्यसमानाधिकरणघटत्वसमाना-**

---

१. अनेकद्रव्यपर्यायात्मकत्वाद्घटस्य सतः कश्चिद् द्रव्यार्थविशेषमाश्रित्यास्तीति घटस्य व्यपदेशः, तस्यैवान्यघटद्रव्यसामान्यं तद्विशेषं द्वयं वाङ्गीकृत्य युगपद्विवक्षायामवक्तव्यता, घटत्वेन घटविशेषेण कथञ्चिद्वर्त्तमानो घटः घटत्वाघटत्वादिना तदेकविशेषापरविशेषादिना वा युगपद्विवक्षायां स्यादस्ति चावक्तव्यश्च घट इति पञ्चमवाक्यबोधः ॥

**धिकरणात्यन्ताभावाप्रतियोगिपरद्रव्याद्यवच्छिन्ननास्तित्वविशिष्टयुगपत्स्वपरद्रव्याद्यवच्छिन्नसत्त्वासत्त्वविषयकावक्तव्यत्ववानिति बोधः ॥**

स्यान्नास्ति चेति, निषेधात्मना मुख्यविषयतावच्छिन्ना योभयात्मना युगपदवक्तव्यत्वविषयता तद्वतो बोधोऽस्माद्भवतीत्याशयेनाह–परद्रव्याद्यपेक्षयेति। मतान्तरेण तु घटस्यैको देशो नास्तित्वे नियतोऽपरश्च सत्त्वासत्त्वाभ्यां युगपदादिष्टस्स घटस्तथाविधविकल्पवशात् नास्ति चावक्तव्यश्च भवति, तात्पर्यार्थमाह तथा चेति, शिष्टं स्पष्टम् ॥

अथ सप्तमभङ्गवाक्यार्थमाह—

**स्यादस्ति नास्ति चावक्तव्यश्च घट इति सप्तमं वाक्यन्तु क्रमार्पितस्वपरद्रव्यादीन् सहार्पितस्वपरद्रव्यादीनाश्रित्यास्तित्वनास्तित्वविशिष्टावक्तव्यत्ववद्धटमाह। तथा च तादृशो घटः प्रतियोग्यसमानाधिकरणघटत्वसमानाधिकरणात्यन्ताभावाप्रतियोगिक्रमार्पितस्वपरद्रव्याद्यवच्छिन्नास्तित्वनास्तित्वोभयविशिष्टसहार्पितस्वपरद्रव्याद्यवच्छिन्नास्तित्वनास्तित्वोभयधर्मविषयकावक्तव्यत्ववान् घट इति बोधः ॥**

स्यादिति, क्रमादुभयमुख्यविषयताद्वयावच्छिन्नावक्तव्यत्वमुख्यविषयताको बोधोऽस्य फलमित्याशयेनाह–क्रमार्पितेति, मतान्तरेण तु यस्यैको देशोऽस्तित्वेऽपरो नास्तित्वेऽन्यश्चोभयथा नियतस्तादृशो घटो विकल्पवशादस्तिनास्त्यवक्तव्यश्च भवतीति। भावार्थमाह तथा चेति स्पष्टम्। वाक्येष्वेषु सप्तसु नयविभागस्तु सामान्यग्राहिणि सङ्ग्रहे प्रथमो भङ्गः, विशेषग्राहिणि व्यवहारे द्वितीयः सङ्ग्रहव्यवहारयोस्तृतीयः, सूक्ष्मवर्त्तमानक्षणग्राहिणि ऋजुसूत्रे चतुर्थः एकदोभयार्पणाया वर्त्तमानक्षणनियतत्वात्, पञ्चमस्सङ्ग्रहर्जुसूत्रयोः, षष्ठो व्यवहारर्जुसूत्रयोः, सप्तमस्तु सङ्ग्रहव्यवहारर्जुसूत्रेष्विति। एते त्रयो नया वक्त्रभिप्रायरूपत्वादर्थनयाः, प्रथमद्वितीयावेव भङ्गौ शब्दादिषु त्रिषु नयेष्वपीति केचित्[1] ॥

---

१. अयम्भावः अर्थप्रधानो वक्त्रभिप्रायोऽर्थनयः सङ्ग्रहादिः, व्यञ्जनस्य परार्थत्वात्तच्छ्रवणसम्भूतः शब्दादिश्रोत्रभिप्रायस्तु शब्दप्रभवमर्थमुपसर्जनतया व्यवस्थापयति, अतस्स शब्दनयश्शब्दसमभिरूढैवम्भूतभेदभिन्नः। तत्र वचनमार्गश्च सविकल्पनिर्विकल्पकभेदेन द्विविधः, सविकल्पं सामान्यं निर्विकल्पः पर्यायः, तत्प्रतिपादकत्वाद्वचनमपि तथा संज्ञाक्रियाभेदेनाभिन्नार्थप्रतिपादकावपि शब्दसमभिरूढौ भेदजिज्ञासारूपविकल्पसाहित्यात्तदभिप्रायेण सविकल्पको वचनमार्गः प्रथमभङ्गकरूपः, एवम्भूतस्तु क्रियाभेदाद्भिन्नमेवार्थं तत्क्षणं प्रतिपादयतीति तदुत्तरं भेदजिज्ञासारूपविकल्पविरहान्निर्विकल्पो द्वितीयभङ्गरूपो वचनमार्गः। अवक्तव्यत्वभङ्गस्तु व्यञ्जननये न सम्भवत्येव व्यञ्जननयस्य श्रोत्रभिप्रायत्वेन तत्र शब्दाभावात् तथा चैतन्नये प्रथमद्वितीयावेव भङ्गाविति ॥

ननु पूर्वोदितेषु भङ्गेषु सत्त्वाद्यवच्छेदकतया स्वद्रव्यक्षेत्रकालभावा उक्ताः तेषां स्वत्वप-रत्वविवेकाय प्रथमं भावपदवाच्यं स्वरूपं दर्शयत्यसाधारणत्वादादौ—

**अत्र सर्वत्र घटस्य स्वरूपमयं घट इति ज्ञानीयप्रकारताश्रयान्यूनानतिप्रसक्तं घटत्वमेव, तादृशप्रकारत्वानाश्रयं विशेष्यावृत्ति च पटत्वादिकं पररूपं, नतु तद्भिन्नत्वमात्रं, द्रव्यत्वादीनां पररूपत्वापत्तेः । घटादीनाञ्च पररूपादिनापि सत्त्वे पदार्थत्वव्याघातप्रसङ्गः, स्वपररूपग्रहणव्यवच्छेदाभ्यां हि पदार्थत्वं व्यवस्थाप्यम् ॥** 5

**अत्र सर्वत्रेति** । पूर्वोदितेषु सप्तसु भङ्गेष्वित्यर्थः, अयं घट इति ज्ञानीयप्रकारतेति, तादृशज्ञाननिरूपितप्रकारताश्रयत्वे सति अन्यूनानतिप्रसक्तत्वं घटत्वस्यैव घटमात्रवृत्तित्वे सति घटे-तरावृत्तित्वात्, तस्मात्सदृशपरिणामलक्षणो घटत्वरूपो धर्मो घटस्य स्वरूपमिति भावः । पर- 10 रूपमाह तादृशेति, अयं घट इति ज्ञाननिरूपितेत्यर्थः, तथा च तादृशप्रकारत्वानाश्रयत्वं पट-त्वादावेव, ते च पटत्वादयः विशेष्ये घटे न वर्त्तन्त इति पररूपा भवन्तीति भावः । तादृश-प्रकारत्वाश्रयभिन्नत्वमात्रं तु न पररूपत्वं तस्य द्रव्यत्वादावपि सत्त्वेन पररूपत्वापत्तेरित्याह न तु तद्भिन्नत्वमात्रमिति, हेतुमाह द्रव्यत्वादीनामिति, ननु घटादिकमस्ति नास्तीति वदताऽ-स्तित्वं नास्तित्वञ्च वस्तुधर्मतयाऽभ्युपगतं भवेत् तत्कथमेकमेव घटादिकं वस्तु सदसत् 15 स्यात् सत्त्वस्यासत्त्वपरिहारेणासत्त्वस्य च सत्त्वपरिहारेण व्यवस्थितत्वात्, अन्यथा तयोर-विशेषः स्यात्, तथा च घटादिकं यदि सत्तर्हि कथमसत्, यदि चासत् कथं सदेकत्र सद-सत्त्वयोर्विरोधादित्याशंकायामाह घटादीनाञ्चेति, निरवच्छिन्नसत्त्वासत्त्वयोरप्रामाणिकत्वेन स्वरूपादिघटितमूर्त्तेरेव सत्त्वादेः प्रतीतेः घटादिकं वस्तु स्वरूपेणास्ति पररूपेण नास्तीत्येव वस्तुतत्त्वं, स्वरूपेणेव पररूपेणापि सत्त्वे घटोऽप्यघटः स्यात्, अघटस्वरूपपटादिवत्, पर- 20 रूपेणेव स्वरूपेणाप्यसत्त्वे घटादिकं घटवस्त्वेव न स्यात् स्वस्वभावादिनाप्यसत्त्वात् खरविषाणवदिति इतरेतररूपापत्त्या पदार्थस्वरूपहानिप्रसङ्ग इति भावः, घटाद्यात्मकत्वञ्च स्वस्वभावादिरूपेण ग्रहणात्परस्वभावादिना व्यवच्छेदाच्च सम्भवति नान्यथेत्याशयेनाह स्वपरेति, न चैकत्र वस्तुनि सत्त्वमसत्त्वञ्च परस्परविरुद्धधर्मयोस्सामानाधिकरण्यायोगा-द्युक्तिविरुद्धमिति वाच्यम्, स्वरूपपररूपाभ्यां विवक्षितयोस्तयोश्शीतोष्णस्पर्शवद्भिन्नाधिक- 25 रणत्वाप्रतीत्या विरोधासिद्धेः, तादृशयोस्तयोरेकाधिकरणत्वधीसद्भावात्, न च दृष्टेऽनुपपन्नं नाम, स्पष्टास्पष्टविषयतया भिन्नस्वभावत्वेन सिद्धयोः प्रत्यक्षशाब्दबोधयोरेकविषयत्वस्य

एकद्रव्याश्रयत्वस्य चैव सत्त्वासत्त्वयोरेकाश्रयत्वस्याविरुद्धत्वात् । न च स्वस्वभावादिना सत्त्वमेव परस्वभावादिनाऽसत्त्वं स्यान्न ततो भिन्नमिति वाच्यम्, तस्यैकस्वभावत्वेऽवस्तुत्व-प्रसङ्गात्, यदि हि घटत्वादिना सत्त्वमेव पटत्वाद्यवच्छिन्नासत्त्वं स्यात् तदा पटत्वादिनापि सन् स्यात् पटत्वाद्यवच्छिन्नासत्त्वस्य घटत्वावच्छिन्नसत्त्वाव्यतिरिक्तत्वात्, तथा घटत्वेनाप्य-
5 सन् स्यात् पटत्वाद्यवच्छिन्नासत्त्वाभिन्नत्वाद्घटत्वावच्छिन्नसत्त्वस्य, तथा च तदितररूपाप-त्त्यादिनाऽपदार्थत्वप्रसङ्गो दुर्वार एव स्यात्। ननु निरुपाख्यं किञ्चित् पररूपाद्यसत्त्वं नास्त्येव येनाव्यतिरिक्तत्वविकल्पकल्पनयाऽवस्तुत्वापत्तिस्स्यात्, किन्तु स्वरूपादिसत्त्वमेव विशिष्ट-मेकस्वभावं पररूपाद्यसत्त्वमुच्यते, अतो नोक्तदोष इति चेन्मैवम्, स्ववाचैवानेकान्तत्व-प्रतिपादनात्, विशिष्टं स्वरूपावच्छिन्नसत्त्वमेव पररूपाद्यवच्छिन्नासत्त्वमुच्यते सदसद्रूपत्वञ्च
10 वस्तुनो न प्रतिपद्यत इति चित्रम्, स्वपररूपाद्यवच्छिन्नसत्त्वासत्त्वोभयरूपतामन्तरा वस्तुनो विशिष्टताया असम्भवात्। नन्वेवमपि सदसद्रूपं वस्तु न सम्भवति, तथाहि असदिति प्रसज्यप्रतिषेधो वा स्यात्पर्युदासो वा, किञ्चातः, उभयत्र दोषात् सन्न भवतीत्यसदिति प्रस-ज्यप्रतिषेधे सन्निवृत्तिरूपनिरुपाख्यस्यासत्त्वेन प्रमाणागोचरत्वाद्वस्तुधर्मत्वानुपपत्तेः, तत्त्वेऽ-भ्युपगम्यमाने वा निरुपाख्यधर्मवतस्सोपाख्यत्वासम्भवेन वस्त्वपि निरुपाख्यं स्यात्, सतोऽ-
15 न्यदसदिति पर्युदासाश्रयणे सदन्तरमसद्भवति, एवमपि वस्तुनस्सदात्मकत्वेन सतोऽन्यत्वा-भावान्न सदसदात्मकं, नहि सत् सदन्तरात्मकमिति चेन्न उभयपक्षाश्रयणेऽपि वस्तुनस्सदसदा-त्मकत्वात्, सत्त्वाननुविद्धस्यासत्त्वस्याभावेन सन्न भवतीत्यत्रापि परद्रव्यादिरूपेण सत एव प्रतिषेधात् तस्य च तत्रासत्त्वात्तत्स्वरूपस्य च सत्त्वानुवेधान्न निरुपाख्यमेव तदसत्त्वमिति न तत्पक्षोपक्षिप्तदोषप्रसक्तिः, पर्युदासपक्षदोषस्तु अनभ्युपगमादेव निरस्तः। तथा च सदस-
20 दात्मकं वस्तु, तत्र न स्वरूपसत्त्वासम्पृक्तं पररूपासत्त्वं नवा पररूपासत्त्वासम्पृक्तं स्वरू

---

१. न चैकस्मिन्नपि द्रव्ये प्रत्यक्षविषयता भिन्नकाले भिन्नकाले च शाब्दविषयतेति यकालभेदान्न तयोर्विरोध इति वाच्यमेककालावच्छेदेन चित्रज्ञाने नीलतदितरविषयत्वयोर्विरोधेनाभानापत्तेः, न च तत्र तथाप्रतीतिरेवा-विरोधसाधिका तयोरिति वाच्यं प्रकृतेऽपि तुल्यत्वात्। किञ्च भावाभावयोर्विरोधस्यापि तत्तत्प्रतियोगिघटितत्वेन विशेष एव विश्रान्ततया जात्यन्तरभूते वस्तुनि तदेकदेशसत्त्वासत्त्वयोरविरोधकल्पन एव लाघवमिति ॥ २. निरुपाख्यं-निःस्वभावम् पररूपाद्यसत्त्वं-पररूपाद्यवच्छिन्नः सत्त्वाभावः बौद्धमतेनायं पूर्वपक्षः। विशिष्ट-मेकस्वभावं-स्वेतरसकलव्यावृत्तिरूपं सदेकस्वभावम् ॥ ३. परद्रव्यादिरूपेण सतः पटादेस्स्वद्रव्यादिरूपेण सति घटे प्रतिषेधः क्रियते पररूपाद्यवच्छिन्नसत्त्वस्य च घटेऽभावात् तदायसत्त्वं न निरुपाख्यं तत्स्वरूपसत्त्व-स्यानुवेधात् सत्त्वाभावो हि घटात्मकः तस्मात्तत्सत्त्वेन सोऽनुविद्ध इति न निरुपाख्य इति भावः ॥ ४. घटो हि स्वरूपेणास्ति, पररूपाद्यवच्छिन्नपटाद्यात्मकस्तु न भवति एवञ्च सत्त्वं तत्प्रतिषेधश्च घटस्वरूपमतस्सत्त्व-मसत्त्वानुविद्धमसत्त्वञ्च सत्त्वानुविद्धमिति भावः ॥

पसत्त्वं, न चानयोरेकत्वमेव, अविगानेन सम्यगुभयोपलब्धेः, न च नानात्वमेव, तद्व्यवस्थाऽ
योगात् तथानुपलब्धेश्चेत्यन्योऽन्यानुविद्धं भेदाभेदवृत्तितत्स्वभावं विशिष्टमुभयमेव तत्
अन्यथा वस्तूनां वैशिष्ट्यानुपपत्तेरिति । ननु भवतु सत्त्वमसत्त्वञ्च वस्तुधर्मो वस्तुस्वरूपत्वं
तयोः कथम्, तथाहि धर्मधर्मिणोः किन्तावद्भेद उताभेद आहोस्विद्भेदाभेदो वा, नाद्यः, वस्तु-
नस्सदसदात्मकत्वासम्भवात्[1] न द्वितीयः, एकधर्म्यभिन्नत्वात्तयोरैक्यापत्तेस्तत्स्वरूपवत्,
धर्मिणो वा भेदस्स्यात् सदसत्त्वयोर्भेदात् नापि तृतीयः, येनाकारेण भेदस्तेन भेदैकान्त्यात्
येन चाकारेणाभेदस्तेनाभेदैकान्त्यात्, तथाप्येकस्योभयरूपत्वासम्भवात्, न च येनैवाकारेण
भेदस्तेनैवाभेदो येन चाभेदस्तेन भेद इति वक्तुं युज्यते विरोधादिति चेन्मैवम्, प्राथमिकविक-
ल्पद्वयोक्तदोषस्यानभ्युपगमतिरस्कृतत्वात् भेदाभेदपक्षस्यैवाभ्युपगमात् । न चात्रापि दोष उक्त
एवेति वाच्यम्, अन्योऽन्यव्याप्तिभावेनास्य जात्यन्तरात्मकत्वेन केवलभेदाभेदप्रत्युक्तदोष-
स्यात्रानवतारात् । तस्माद्येनाकारेण भेदस्तेन भेद एव, येन चाभेदस्तेनाभेद एवेत्यत्यन्त-
परित्यक्तानेकान्तवादविषयमेतत् । अभेदाननुविद्धस्य केवलभेदस्य भेदाव्याप्यस्याभे-
दस्य चाप्रसिद्धेः, न च येनाकारेण भेदस्तेनैवाभेद इत्याद्यपि साम्प्रतम्, सर्वथैकनिमित्तत्वे
भेदाभेदद्वयानुपपत्तेः, तर्हि कथं धर्मधर्मिणोर्भेदाभेद इति चेत्कथञ्चिद्भेदः कथञ्चिदभेद इति
गृहाण, धर्माणां मिथो भेदात्प्रतिनियतधर्म्याश्रितत्वाच्च कथञ्चिद्भेदः, धर्माणां धर्मिणा सर्वथै-
कत्वे धर्मतयापि भेदासम्भवात्, तथा धर्माणामेवाभ्यन्तरीकृतधर्मिस्वरूपत्वात् धर्मिणोऽपि
चाभ्यन्तरीकृतधर्मस्वरूपत्वात्कथञ्चिदभेदः, अत्यन्तभेदे धर्मधर्मिकल्पनाऽसम्भवात्, अति-
प्रसङ्गात्[2], अनुवृत्तव्यावृत्तस्य च वस्तुनोऽध्यक्षसिद्धत्वेन न भेदाभेदस्योत्प्रेक्षितत्वमपि,
अनुभवो[3] हि पुरोऽवस्थिते घटादौ तदतद्रूप एवोपजायते, अन्यथा वस्त्वभावप्रसङ्गादिति ।
ननु जीवादीनां द्रव्यत्वावच्छिन्नानां सत्त्वासत्त्वादिसप्तभङ्गीसाधने किं स्वद्रव्यं किं वा
परद्रव्यं, तदवच्छिन्नभेदाप्रसिद्ध्या परत्वस्य तदभावे च स्वत्वस्य दुर्वचत्वादिति चेदुच्यते
शुद्धं द्रव्यं स्वं सत्त्वावच्छेदकं, अशुद्धञ्च परमसद्द्रव्यं असत्त्वावच्छेदकं, शुद्धत्वाशुद्धत्वे च
भेदाभेदप्रधानव्यवहारनिश्चयसाक्षिकाखण्डोपाधिरूपे, न च शुद्धद्रव्यस्य स्वपरद्रव्यव्य-
वस्था कथं, तस्य द्रव्य[4]क्षेत्रकालभावात्मकत्वादिति वाच्यम्, सकलद्रव्यक्षेत्रकालभावरूपं
व्यापकं स्वद्रव्यं विकलद्रव्यादिकं परद्रव्यमित्यङ्गीकारादेवमन्यत्रापि भाव्यं ॥

१. सत्त्वासत्त्वयोर्भिन्नत्वादिति भावः । ऐक्यापत्तेरिति, तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति ॥
२. स्वभावस्य धर्मत्वेन धर्मधर्मिणोरेकान्तभेदे धर्मिणो निस्स्वभावत्वं स्यात् तथा च ज्ञेयत्वादिधर्माननु
वेधाद्धर्मिणोऽभावप्रसङ्गः, तदभावादेव च धर्माणां निराश्रयत्वादाश्रयं विना ग्रहणासम्भवादभावप्रसङ्ग इत्यतिप्र-
सङ्गपदार्थः ॥ ३. ज्ञानवेद्या हि वस्तुव्यवस्थितिः नहि भेदाभेदात्मकत्वं संवेद्यते, उभयरूपस्य संवेदनस्याभावा-
दित्याशंकायामाहानुभवो हीति ॥ ४. भाव एव हि द्रवति द्रोष्यति अदुद्रुवदिति द्रव्यं, क्षीयन्ते क्षेष्यन्ति

अथ स्ववृत्त्यसाधारणधर्म एव स्वरूपमित्युक्त्वा पुनरिदानीमन्येऽपि घटस्य स्वरूपाः पररूपाश्च भवन्तीत्यभिप्रायेणाह—

**एवं तन्निष्ठाः स्थौल्यादिधर्मवर्त्तमानकालीनपर्यायपृथुबुध्नोदराद्याकाररूपादिगुणघटनक्रियाकर्तृत्वादयस्स्वरूपा अन्ये पररूपा बोध्याः ॥**

5 **एवमिति ।** तन्निष्ठा इति, घटनिष्ठा इत्यर्थः । स्थौल्यादिधर्मेति, स्थौल्यादयो धर्माः, वर्त्तमानकालीनपर्यायविशेषाः, पृथुबुध्नोदराद्याकाराः, रूपादिगुणाः, घटनक्रियाकर्तृत्वमित्यादयस्स्वरूपास्तद्भिन्नाः पररूपा इत्यर्थः । घटमात्रस्य पूर्वं स्वपररूपमुपदर्श्य घटविशेषस्य तद्दर्शयितुं वा प्राहैवमिति । तन्निष्ठा इति, तत्तद्घटनिष्ठा इत्यर्थः, अयं भावः, घटत्वाक्रान्ते हि घटविशेषे योऽयं स्थौल्यादिधर्मस्स तस्य स्वरूपं घटान्तरनिष्ठो धर्मविशेषः पररूपम्, 10 घटोऽयं स्थौल्यादिस्वरूपेणास्ति, अन्यघटनिष्ठधर्मेण नास्ति, स्वरूपेणाप्यसत्त्वे घटोऽयमसन् स्यात्, पररूपेणास्तित्वोपगमे सर्वघटानामैक्यप्रसङ्गेन सामान्याश्रयव्यवहारविलोपप्रसङ्गः । अनेकघटवृत्तिसामान्याभावात् । प्रतिक्षणं घटादौ सजातीयपरिणामोत्पत्तिसिद्धान्तसिद्धतया ऋजुसूत्रनयतो वर्त्तमानक्षणवृत्तिघटपर्यायो घटस्य स्वरूपं, अतीतानागतक्षणनिष्ठघटपर्यायाः पररूपं, तथा च वर्त्तमानकालीनपर्यायेण घटोऽस्ति, क्षणान्तरवृत्तिपर्यायेण च नास्ति, तेन 15 रूपेणापि सत्त्वे घटस्यैकक्षणावृत्तित्वं स्यात् स्वीयरूपेणाप्यसत्त्वे घटव्यवहारस्यैव विलोपापत्तिः, विनष्टानुत्पन्नघटव्यवहाराभाव इव । अथवा पूर्वोत्तरकुसूलकपालाद्यवस्थाकलापो मध्यवर्त्तिघटस्य पररूपं मध्यवर्त्तिघटपर्यायः स्वरूपं तथा च यदि तादृशपररूपेणापि स्यात्तदा कुसूलाद्यवस्थायां तदुपलब्धिप्रसङ्गो घटपर्यायोत्पत्तिविनाशार्थं प्रयत्नवैफल्यप्रसङ्गश्च स्यात् । यदि च स्वरूपेणापि न स्यात्तर्हि तत्कार्यजलाहरणादिकमपि नोपलभ्येत । कालविशेषाव- 20 स्थायिनि क्षणमात्रवर्त्तिनि वा घटे वर्त्तमानो यः पृथुबुध्नोदराद्याकारस्स तस्य स्वरूपं, इतराकारः पररूपम्, स्वरूपेण सोऽस्ति पररूपेण च नास्ति, उभयथापि सत्त्वे तद्घट इतरेषां व्यवहारप्रसङ्गः, आकारविशेषसत्त्वाधीनत्वाद्व्यवहाराणाम् । उभयथापि नास्तित्वे घटासत्त्वप्रसङ्गः । रूपविशिष्टो घटश्चक्षुर्ग्राह्य इति व्यवहारे रूपद्वारा घटो गृह्यत इति रूपं घटस्य स्वरूपं, न रसादिमुखेन चक्षुर्ग्राह्य इति रसादिकं पररूपं, तथा च स स्वरूपेणास्ति पररू- 25 पेण च नास्ति, उभयथापि सत्त्वे रसस्यापि चक्षुर्जन्यज्ञानविषयत्वापत्त्या रसनादीन्द्रियकल्पना व्यर्था स्यात् । उभयथापि नास्तित्वे घटस्याग्रहणप्रसङ्गः रूपादिज्ञाननियतत्वाद्घटादि-

---

क्षिताश्चास्मिन पदार्था इति क्षेत्रं, कल्यन्ते कलयिष्यन्ते कलिताश्चास्मादिति कालः, भवति भविष्यत्यभूदिति भावः पर्याय इति सत्त्वैव द्रव्यक्षेत्रकालभावात्मना विशेष्यते तस्या एव तथा व्यवहारविषयत्वघटनादिति ॥

ज्ञानस्य । समभिरूढनयार्पणतः शब्दभेदेऽप्यर्थभेदध्रौव्येण घटकुटादिशब्दानामर्थभेदोऽस्ति तथा च घटत इति व्युत्पत्त्या घटनक्रियाकर्तृत्वं घटस्य स्वरूपं भवति, इतरच्च पररूपं भवति, घटश्च तेन रूपेणास्ति पररूपेण च नास्ति, उभयथापि सत्त्वे भिन्न-प्रवृत्तिनिमित्ताभावेन शब्दभेदो न स्यात्, उभयथाप्यसत्त्वे घटादिशब्दानां निरर्थ-कत्वापत्तेः । एवं सम्मत्याद्यनुसारेण नामस्थापनाद्रव्यभावभिन्नेषु विधित्सिताविधि- 5
त्सितप्रकारेण सत्त्वासत्त्वे ताभ्याञ्च युगपदवाच्यत्वं भाव्यं, व्यतिरेके च प्रतिनियत-व्यवहारोच्छेदो बाधकः । अत्रायं क्रमोऽवसेयः नामस्थापनाद्रव्यभावभिन्नेषु घटादिषु विधित्सिताविधित्सितप्रकारेण सत्त्वासत्त्वे, स्वीकृतप्रतिनियताकारे नामादिके घटादौ संस्था-नमादाय, स्वीकृतप्रतिनियतसंस्थानादिके मध्यमावस्थारूपवर्त्तमानकालीनपर्यायमादाय, ततो मध्यमावस्थारूपे तस्मिन् वर्त्तमानावर्त्तमानक्षणपर्यायमादाय, क्षणपरिणतिरूपे च चक्षुर्ज- 10
न्यज्ञानविषयत्वाविषयत्वाभ्यां, लोचनप्रतिपत्तिविषये तत्रैव घटतदितरशब्दवाच्यत्वाभ्यां, घटशब्दाभिधेये च हेयोपादेयान्तरङ्गबहिरङ्गोपयोगानुपयोगरूपतया, उपयुक्ते त्वभिमतार्थबो-धकत्वानभिमतार्थबोधकत्वाभ्यां विज्ञेये इति ॥

तदेवं स्वरूपपररूपाभ्यां सदसत्त्वं व्यवस्थाप्य द्रव्यावलम्बनेन तदाह—

**एवं शुद्धं मृद्द्रव्यं घटस्य स्वरूपं, तद्भिन्नं स्वर्णादि परद्रव्यम्, तद्रूपे- 15
णापि घटादीनां सत्त्वे द्रव्यस्य प्रतिनियमो न स्यात् ॥**

एवमिति, पूर्वोपदर्शितस्वपररूपप्रकारेणेत्यर्थः, शुद्धं मृद्द्रव्यमिति मृत्त्वेन लोकप्रसिद्ध-मित्यर्थः, तेन मृत्तिकामात्रस्य न ग्रहः सुवर्णादीनामपि मृद्द्रव्यत्वेन पररूपत्वासम्भवात् एवञ्च पार्थिवत्वेनेत्यस्यापि लाभः । स्वर्णादीत्यादिनाऽबादीनां ग्रहः । एवञ्च घटः स्वद्रव्येण मृदात्मना पार्थिवत्वेन वाऽस्ति परद्रव्येण स्वर्णादिनाऽबादित्वेन वा नास्तीति भावः । 20
अन्यथेतरेतररूपापत्त्याऽयं मृदात्मकोऽयं स्वर्णात्मक इत्यादिद्रव्यप्रतिनियमो न स्यादि-त्याशयेनाह तद्रूपेणापीति, स्वर्णादिरूपेणापीत्यर्थः, तथोभयथाप्यसत्त्वे घटादिव्यवहारविलोप इत्यपि बोध्यम् । न चोभयथापि सत्त्वे न द्रव्यप्रतिनियमव्याघातः तथाहि अनेकद्रव्य-निष्ठस्यापि संयोगविभागादेर्न द्रव्यप्रतिनियमव्याघातो घटपटसंयोगस्य घटात्मना पटात्मनापि

---

१ घटादिषु विधित्सितरूपेण सत्त्वमविधित्सितरूपेणासत्त्वं ताभ्यां युगपदवाच्यं विज्ञेयं विपर्यये प्रतिनि-यतव्यवहारोच्छेदो बाधकः, विधित्सिते घटादौ स्वसंस्थानापेक्षया सत्त्वं परसंस्थानापेक्षया चासत्त्वं ताभ्यां युगपदवाच्यत्वमित्येवंरीत्या भङ्गत्रयं प्रमाणात्मकं विज्ञेयमिति भावार्थः । संस्थानमादायेति, तद्वृत्तिस्थौल्यादि-धर्ममादायेत्यर्थः । मध्यमावस्थारूपेति, पूर्वान्तरकुसूलकपालाद्यन्तरालवर्त्तिपर्यायेत्यर्थः स्पष्टमन्यत् ॥

सत्त्वादथ च तयोरेव संयोग इति नियमाश्चेति वाच्यम् , तस्यानेकद्रव्यगुणत्वेनानेकद्रव्यस्यैव स्वद्रव्यत्वात् स्वानधिकरणद्रव्यान्तरस्य च परद्रव्यत्वात् तथा च स्वद्रव्यापेक्षयाऽस्तित्वाभावेऽयं संयोगोऽनयोरेवेति प्रतिनियमो व्याहन्यत एव । अत्रायन्तु विशेषः, अव्यासज्यवृत्तिधर्माणामस्तित्वे स्वसमवायिद्रव्यमात्रापेक्षा, व्यासज्यवृत्तिधर्माणान्तु स्वपर्याप्तिमद्रव्यापेक्षेति ॥

क्षेत्रावलम्बनेन ते घटयति—

**एवं घटस्य निजं क्षेत्रं भूतलादि परक्षेत्रं तद्भिन्नं कुड्यादि स्वक्षेत्र इव परक्षेत्रेऽपि सत्त्वे क्षेत्रनियमानुपपत्तिप्रसङ्गः ॥**

**एवमिति ।** क्षेत्रमिति, अधिकरणमित्यर्थः, इहत्यत्वं घटस्य क्षेत्रं तेन रूपेणास्ति तद्भिन्नमिति भूतलादिभिन्नमित्यर्थः स्वानधिकरणदेश इति भावः, स्वानधिकरणदेशाऽवच्छेदेन च नास्तीति तात्पर्यार्थः । उभयथा सत्त्वे इतरेतररूपापत्तिमाह—स्वक्षेत्र इवेति, क्षेत्रनियमानुपपत्तिप्रसङ्ग इति, अस्मिन्नेव क्षेत्रे घटोऽस्ति न तत्क्षेत्र इति नियमभङ्ग इत्यर्थः, उभयथाप्यसत्त्वे तु निराश्रयत्वापत्तिरिति भावः ॥

अथ कालमाश्रित्य ते निरूपयति—

**एवं वर्त्तमानकाल एव घटस्य कालः, तद्भिन्नातीतादिः परकालः स्वकालवत्परकालेऽपि घटस्य सत्त्वे प्रतिकालनियमानुपपत्तिः प्रसज्येत । इति सप्तभङ्गीनिरूपणम् ॥**

**एवमिति ।** घटाधिकरणीभूतः कालो घटस्य स्वकालः, तदनधिकरणः भूतकालो ध्वंसकालो वा परकालः, उभयथा घटस्य सत्त्वे दोषमाह स्वकालवदिति, प्रतिकालेति, अस्मिन्नेव काले घटोऽस्ति नातीतादिकाल इति नियतकालव्यवहारो न भवेदेव इष्टापत्तौ तु नित्यत्वापत्तिप्रसङ्गः, उभयथाऽसत्त्वे तस्य सर्वकालासम्बन्धित्वेनावस्तुत्वापत्तिः स्यादिति भावः । ननु घटस्य सत्त्वे यथा स्वरूपादिरवच्छेदकः तथा स्वरूपादौ स्वरूपाद्यन्तरमस्ति न वा ? यदि नास्ति कथं तर्हि तस्य सत्त्वं यद्यस्ति तर्हि कथं नानवस्था ? यदि सुदूरमपि गत्वा गत्यन्तराभावेन कस्यचित्सत्त्वे स्वरूपाद्यनपेक्षयाऽनवस्था वार्यते तर्हि घटादीनां सत्त्वेऽपि तथा भवतु किमनया स्वगृहप्रक्रियेति मैवम्, वस्तुनो हि यथैवाबाधिता प्रतीतिस्तथैव तद्व्यवस्था, प्रतीतिश्च स्वरूपादिघटितमूर्त्तेरेव सत्त्वादेर्ग्राहिका, अन्यथा नानानिरंकुशविप्रतिपत्तीनां वारयितुमशक्यत्वात् । न च तस्यां स्वरूपादिकमन्यदेव प्रतीयते

येन स्वरूपान्तरापेक्षा स्यात् । न च जिज्ञासाधीना हि स्वरूपाद्यपेक्षा तथा च तत्रापि प्रकृत इव जिज्ञासा स्यादेव तथा चास्त्यनवस्थेति वाच्यम्, यत्रैव न सा तत्रैव विश्रान्त्या तदभावात् केनचिन्नयेन स्वरूपादेः स्वरूपत एवावच्छेदकत्वं निर्णीयैवास्तित्वादिप्रवृत्तेरनवस्थाया अभावादिति । एतेनैकस्मिन् धर्मिणि सत्त्वासत्त्वरूपौ विधिनिषेधात्मकौ धर्मौ न सम्भवतो विधिमुखप्रत्ययविषयत्वनञुल्लिखितप्रत्ययविषयत्वरूपत्वेन शीतोष्णयोरिव 5 तयोः परस्परं विरोधात्, यत्रास्तित्वं तत्र नास्तित्वस्य यत्र च नास्तित्वं तत्रास्तित्वस्य विरोधात् । तथाऽस्तित्वाधिकरणस्य नास्तित्वाधिकरणस्य च भिन्नत्वेनैकत्र तयोस्सत्त्वे विभिन्नाधिकरणवृत्तित्वरूपवैयधिकरण्यं दोषः स्यात्, तथा येन रूपेणास्तित्वं येन च नास्तित्वं तादृशरूपयोरस्तित्वनास्तित्वनियामकस्वपररूपाद्यन्तरापेक्षायामनवस्थादौस्थ्यम्, तथा येन रूपेण सत्त्वं तेनैवासत्त्वस्य येनासत्त्वं तेनैव सत्त्वस्य च प्रसङ्गेन सङ्करः, येन 10 रूपेण सत्त्वं तेनासत्त्वमेव स्यान्न तु सत्त्वं येन रूपेण चासत्त्वं तेन सत्त्वमेव स्यान्न त्वसत्त्वमिति व्यतिकरो दोषः, तथा सत्त्वासत्त्वस्वरूपत्व इदमित्थमिति निश्चेतुमशक्तेस्संशयो दोषः, ततश्चानिश्चयरूपाप्रतिपत्तिर्दोषः, ततश्च सत्त्वासत्त्वात्मनो वस्तुनोऽभावो दोष इत्यष्टौ दोषास्सम्भवन्तीति प्रत्युक्तम्, स्वपररूपाद्यपेक्षया विवक्षितयोस्सत्त्वासत्त्वयोः प्रतीयमानयोर्वस्तुन्यविरोधात् स्वरूपादिना सत्त्वस्येव पररूपादिनाऽसत्त्वस्यापि प्रतीतिसिद्धत्वेनानुपलम्भ- 15 प्रयुक्तस्य विरोधस्याभावात् । न च विरोधादेकत्र तयोः प्रतीतिर्मिथ्येति वाच्यम्, परस्पराश्रयात्, विरोधे सति तेन बाध्यमानत्वान्मिथ्यात्वसिद्धिः, सिद्धे च तस्मिन् सत्त्वासत्त्वयोर्विरोधसिद्धिरिति । न च वध्यघातकभावरूपोऽप्यहिनकुलादिवद्विरोधः, तस्यैकस्मिन् काले वर्तमानयोस्सम्बन्धे सत्येव भावात्, न ह्यसंयुक्तमहिं नकुलो नाशयति, तथा सति सर्वत्राहेरभावप्रसङ्गात् तथाप्रकृते सति सम्बन्धे बलीयसाऽपरो बाध्यत इति वाच्यं नहि तथा सद- 20 सत्त्वयोः क्षणमात्रमपि परेण सत्त्वमेकत्राभ्युपगम्यते तथा च कथं वध्यघातकरूपो विरोधः, अभ्युपगमे वा तुल्यबलत्वेन तयोर्न वध्यघातकभावः । नापि सहानवस्थानलक्षणो विरोधः, कालभेदेनैकत्र वर्तमानयोः श्यामत्वपीतत्वयोरेव तत्सम्भवात्, उत्पद्यमानो हि पीतं श्यामो विनाशयति, नहि तथास्तित्वं नास्तित्वञ्च पूर्वोत्तरकालभावि, अस्तित्वकाले नास्तित्वाभावे सत्तामात्रं सर्वं प्राप्नुयात्, नास्तित्वकालेऽस्तित्वाभावे तु सत्त्वाश्रयबन्धमोक्षव्यवहारो 25 विरुद्ध्येत, सर्वथाऽसत आत्मलाभासम्भवात् सर्वथा च सतो विनाशासम्भवात् । न चापि प्रतिबध्यप्रतिबन्धकभावरूपो विरोधः, अस्तित्वकाले नास्तित्वस्य प्रतिबन्धकाभावात् । स्वरूपेणास्तित्वकालेऽपि पररूपादिना नास्तित्वस्य प्रतीतिसिद्धत्वात् । सत्त्वासत्त्वयोरेकाधिकरणवृत्तित्वेन प्रतीतत्वाच्च न वैयधिकरण्यं दोषः, नाप्यनवस्थादोषः, अनन्त-

धर्मात्मकस्य वस्तुनः प्रमाणप्रतिपन्नत्वेनापदार्थपरम्पराकल्पनाविरहेण तस्या अभ्युपगमात् नापि संकरव्यतिकरौ प्रतीतिसिद्धेऽर्थे कस्यापि दोषस्याभावात्, दोषाणां प्रतीत्यसिद्धपदार्थविषयकत्वात्, परस्परानुविद्धसत्त्वासत्त्वयोर्जात्यन्तरात्मकत्वेनैकान्तसत्त्वावलम्बिदोषासम्भवाच्च, नवा संशयो दोषः, स हि सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च जायते 5 स्थाणुत्वपुरुषत्वोचिते हि देशे नातिप्रकाशान्धकारकलुषितायां वेलायामूर्ध्वतामात्रं सामान्यं विलोकयतो वक्रकोटरपक्षिनीडादीन् स्थाणुगतान् पुरुषगतांश्च वस्त्रसंयमनशिरःकण्डूयनशिखाबन्धादीन् विशेषाननुपलभमानस्य तेषाञ्च स्मरतः पुरुषस्यायं स्थाणुर्वा पुरुषो वेति संशय उदेति, अनेकान्तवादे च विशेषोपलब्धिरप्रतिहतैव, स्वरूपपररूपादिविशेषाणां प्रत्यर्थमुपलम्भात् तथा च विशेषोपलब्धेः कथं संशयः, अवच्छेदकभेदेनार्प्यमाणयोस्सत्त्वा-10 सत्त्वयोरेकत्र विरोधाभावेन संशयलक्षणानाक्रान्तत्वात्, एवञ्च संशयमूलकावप्रतिपत्तिवस्त्वभावरूपौ दोषौ दूरापास्ताविति न कोऽपि दोष इति । तदेवं स्वसमयसर्वस्वरूपा सप्तभङ्गी समासतो निरूपितेत्याहेतीति ॥

इत्थमागमं निरूप्य तदाभासमाह—

**अनाप्तपुरुषप्रणीतवचनसम्भूतमयथार्थशाब्दज्ञानमागमाभासः, तद्वचनमप्यागमाभासः । समाप्तमागमनिरूपणम् ॥** 15

**अनाप्तेति** । अयथार्थवक्तृवचनेन समुद्भूतं यदयथार्थं शाब्दज्ञानं स आगमाभास इत्यर्थः । निजविनोदार्थं क्रीडापरवशो रागाक्रान्तः पुरुषः किञ्चन वस्त्वन्तरमलभमानो बालैस्साकं क्रीडाभिलाषेण सोमोद्भवाया रोधसि तालहिन्तालयोर्मूले सुलभाः पिण्डखर्जूराः सन्ति त्वरितं गच्छत गच्छत शावकाः ? इति वाक्यमुच्चारयति, तज्जन्यं च यच्छाब्दज्ञानं 20 तद्विसंवादित्वादागमाभासरूपमिति भावः । तादृशज्ञानजनकवाक्यमपि कारणे कार्योपचारादागमाभासात्मकमेवेत्याह तद्वचनमपीति । तदेवं परोक्षप्रमाणस्य पञ्चमभेद आगमस्संग्रहेण निरूपित इत्याशयेन निगमयति समाप्तमिति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायामागमनिरूपणं नाम षष्ठः किरणः ॥

## अथ सप्तमः किरणः ।

एवं प्रमाणे निरूपिते तस्य प्रामाण्ये वादिनां विप्रतिपत्तेस्तद्विवेचयितुमाह—

**ज्ञानस्य प्रामाण्यं प्रमेयाऽव्यभिचारित्वमेव । स्वातिरिक्तग्राह्यापेक्षया प्रमेयव्यभिचारित्वं ज्ञानस्याप्रामाण्यम्, सर्वन्तु स्वापेक्षया प्रमाणमेव बाह्यार्थापेक्षया तु किञ्चित्प्रमाणं किञ्चिच्चाप्रमाणम् ॥**　5

ज्ञानस्येति । प्रमेयेति, प्रमीयमाणो योऽर्थस्तदव्यभिचरणशीलत्वं ज्ञाननिष्ठं प्रामाण्यमित्यर्थः । अप्रामाण्यपदार्थमाह स्वातिरिक्तेति, सर्वसंवित्तेस्स्वसंवेदनस्य कथञ्चित्प्रमाणत्वोपपत्तेर्बहिःपदार्थापेक्षयैव किञ्चिज्ज्ञानं प्रमाणं किञ्चिच्च प्रमाणाभासमित्यभिप्रायेणाह सर्वन्त्विति, न चैवं विरोधः प्रसज्यत इति वाच्यम्, जीवस्यैकस्यावरणविगमविशेषात्सत्येतरसंवेदनपरिणामसिद्धेः श्वेतघटे पीतघटज्ञानवत् । तथा च सर्वत्र ज्ञाने स्वरूपे प्रामाण्यमनावृतमेव, बहिरर्थे त्वनियतस्तत्क्षयोपशम इति स्वभावकल्पनान्न विरोध इति भावः । एतेन ज्ञानमात्रं स्वापेक्षया प्रत्यक्षप्रमाणम्, न चैवमनुमितित्वादिना प्रत्यक्षत्वस्य साङ्कर्यमिति वाच्यम्, क्वचित्संकीर्णजातेरप्यदुष्टत्वोपगमात्, एवञ्च ज्ञानस्यार्थोन्मुखतयेव स्वोन्मुखतयापि प्रतिभासनं भवतीति सूचितम् । न च यस्यानुभाव्यत्वं तस्याननुभूतित्वं दृष्टं यथा घटादिः, ज्ञानस्यानुभाव्यत्वेऽननुभूतित्वप्रसङ्ग इति वाच्यमनुभूतित्वेनैव ज्ञानस्यानुभवात्, न पुनरनुभाव्यत्वेन, ज्ञातुर्ज्ञातृत्वेनानुभववत्, नापि ज्ञानस्यानुभाव्यत्वं दोषः पदार्थापेक्षयाऽनुभूतित्वात्, स्वापेक्षया त्वनुभाव्यत्वात् । न च विरोधः, अपेक्षाभेदात्, एकस्य पितृत्वपुत्रत्ववत् । न च स्वात्मनि क्रियाविरोधः, अनुभवसिद्धेऽर्थे विरोधासिद्धेः । किञ्च का नाम क्रियाऽऽत्मनि विरुद्धा, न तावत्परिस्पन्दस्वरूपा, तस्या द्रव्यवृत्तित्वेनाद्रव्ये ज्ञानेऽसम्भवात् । न धात्वर्थात्मिका, सापि न तावदकर्मिका, वृक्षस्तिष्ठतीत्यादौ तस्या वृक्षादिरूपे स्वात्मन्येव प्रतीत्याऽप्यविरोधवत् ज्ञानं प्रकाशत इत्यादावपि अकर्मकक्रियाया ज्ञानस्वरूपत्वेऽविरोधात्, प्रतीतेरुभयत्रापि तुल्यत्वात् । अथ ज्ञानमात्मानं जानातीति सकर्मिका क्रिया स्वात्मनि विरुद्धा स्वरूपादपरत्रैव कर्मत्वप्रतीतेरित्युच्यते तदपि न चारु, आत्माऽऽत्मानं हन्ति प्रदीपस्स्वात्मानं प्रकाशयतीत्यादिकायाः क्रियाया अपि विरोधापत्तेः । न च नात्र पारमार्थिकं कर्मत्वं किन्त्वात्मादौ कर्त्तर्युपचरितमेवेति वाच्यम्, कर्त्तरि ज्ञानेऽपि स्वरूपस्यैव ज्ञानक्रियानिरूपितकर्मत्वेनोपचारात्, न च ज्ञाने कर्मत्वं तात्त्विकं प्रमेयत्वादिति वाच्यम्, सर्वथा कर्मत्वस्य कर्तुर्ज्ञानादभिन्नत्वे स्याद्विरोधः यदि कर्त्तृ कथं कर्म यदि कर्म कथं कर्त्रिति, अथ सर्वथा

भिन्नं कर्मत्वं, तर्हि कथं तत्र ज्ञानस्य जानातीति क्रिया स्वात्मनि स्याद्येन विरुध्येत, तथात्वे कथं घटं करोतीति क्रियाऽपि कटकारस्य स्वात्मनि न स्याद्यदि न विरुध्यते। कर्त्तुः कर्मत्वं कथञ्चिद्भिन्नमित्येतस्मिंस्तु दर्शने ज्ञानस्यात्मनो वा सर्वथा स्वात्मनि क्रिया दूरोत्सारितैवेति न विरुद्धतामधिवसतीति। न च ज्ञानक्रियायाः कर्त्तृसमवायिन्याः कर्मतया
5 स्वात्मनि विरोधस्ततोऽन्यत्रैव कर्मत्वदर्शनादिति वाच्यम्, तर्हि करणत्वमपि तत्र न स्यात् दृश्यते हि ज्ञानेनार्थमहं जानामीति करणत्वम्, न च ज्ञानेनेत्यनेन विशेषणज्ञानं करणत्वेन विवक्षितमर्थं जानामीत्यनेन विशेष्यज्ञानं कर्मत्वेन विवक्षितं तस्मात्करणमन्यत् कर्मान्यदिति वाच्यम्, कस्यापि विशेषणज्ञानेन विशेष्यं जानामीति प्रतीतेरनुदयात्। किन्तु विशेषणज्ञानेन विशेषणं विशेष्यज्ञानेन च विशेष्यं जानामीत्यनुभवात्। न चादौ दण्डाग्रहे
10 दण्डिनमहं वेद्मीति कथं न दण्डविशिष्टपुरुषबुद्धिरन्यथा दण्डरहितेऽपि पुरुषे तथा प्रत्ययप्रसङ्गादिति वाच्यम्, दण्डविशिष्टे पुरुषे प्रवर्त्तमानया बुद्ध्या सकृदेव दण्डविशिष्टपुरुषग्रहणात् दण्डरहिते च तद्वैशिष्ट्याभावादेव तथा प्रतीत्यनुदयात्। ततो विशेष्यज्ञानं सकृदेव विशेषणविशेष्योभयालम्बनमेव न तु विशेषणज्ञानेन जन्यत्वात्केवलं विशेष्यविषयम्। विशेषणज्ञानस्य करणत्वे विशेष्यज्ञानस्य च ज्ञानकार्य्यत्वे विशेषण-
15 ज्ञानं प्रत्यपि करणान्तरापत्तिश्च स्यात् तत्रापि दण्डत्वादिजातिज्ञानस्य करणत्वाभ्युपगमे तत्राप्यन्यस्य वक्तव्यत्वापत्तेः, तस्माद्विशेषणविशेष्यज्ञानयोर्न करणत्वक्रियात्वे अपि तु ते एकज्ञानस्वरूपे अत एव च तयोर्यथा न विरोधस्तथा कर्मत्वेनापि, तस्मात् प्रमातुरात्मनो वस्तुपरिच्छित्तौ साधकतमत्वेन व्यापृतं रूपं करणं निर्व्यापारं तु क्रिया स्वातंत्र्येण पुनर्व्याप्रियमाणः कर्त्ता आत्मेति ज्ञानात्मक एवात्मा ज्ञानात्मनार्थं जानातीति कर्त्तृकरण-
20 क्रियाविकल्पेन प्रतीतिसिद्धः, एवं कर्मव्यवहारोऽपि ज्ञानात्माऽऽत्मनाऽऽत्मानं जानातीति

---

१. ज्ञानक्रियायाः करणज्ञानस्य च भिन्नत्वान्नास्ति विरोध इति चेत्किं करणज्ञानं का वा ज्ञानक्रियेत्यत्राह न चेति ॥ २. दण्डाग्रहेऽपि दण्डविशिष्टपुरुषबुद्ध्यभ्युपगम इत्यर्थः ॥ ३. तुल्यदेशावस्थायिनि तुल्येन्द्रियग्राह्येऽर्थे घटपटादौ एकस्यापि ज्ञानस्य व्यापारेऽविरोधः, न च तत्रापि विषयभेदेन ज्ञानभेदो भाव्यः, ज्ञानानां युगपद्भावानभ्युपगमात् नापि क्रमेण, तथाऽप्रतीतेः, युगपद्भावे च कार्यकारणभावोऽपि न स्यादेव सव्येतरगोविषाणवत् तस्माद्विशेष्यज्ञानं विशेषणविशेष्योभयावलम्बनमेवेत्याशयेनाह ततो विशेष्यज्ञानमिति ॥ ४. ननु चक्षुरादिकं हि करणं ज्ञानक्रियातो भिन्नमेव, न च ज्ञानेनार्थं जानामीति प्रतीत्या ज्ञानस्यापि करणत्वमिति वाच्यम् तत्र ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदस्य चक्षुषो बोधकत्वादिति चेन्न तस्य साधकतमत्वासम्भवात् व्यवधानात् ज्ञानस्यैव साधकतमत्वात् न च यदेव ज्ञानं पदार्थस्य ज्ञानक्रियायां करणं तदेव ज्ञानक्रियेति कथं तत्र क्रियाकरणव्यवहारः प्रातीतिकः स्याद्विरोधादिति वाच्यम् कथञ्चिद्भेदादित्याशयेनाह तस्मात्प्रमातुरिति ॥

घटते सर्वथा कर्तृकरणकर्मक्रियाणामभेदानभ्युपगमात् तासां कर्तृत्वादिशक्तिनिमित्तत्वात्कथञ्चिद्भेदसिद्धेः । ततश्च ज्ञानं स्वप्रकाशमेवेति संक्षेपः ॥

ननु तत्प्रामाण्यनिश्चयस्स्वतो वा परतो वा स्यात् न स्वतः, स्वसंविदितत्वेऽपि ज्ञानत्वेनैव ज्ञानस्य ग्रहणात् न तु तन्निष्ठप्रामाण्येन, ज्ञानत्वस्य त्वाभाससाधारणत्वात् प्रामाण्यस्यापि ग्रहे सर्वेषां विप्रतिपत्त्यभावप्रसङ्गाच्च स्वस्वज्ञानस्य हि प्रामाण्यग्रहे सर्वे प्रवादास्सत्याः स्युः । ज्ञानेन स्वतः प्रामाण्यग्रहे प्रामाण्यनिश्चयात्संशयोच्छेदप्रसङ्गश्च यदि हि ज्ञानं न गृहीतं तदा धर्मिज्ञानाभावादेव न तत्संशयः, समानधर्मवत्तया धर्मिज्ञानस्य संशयहेतुत्वात् गृहीते च ज्ञाने तत्प्रामाण्यमपि गृहीतमेवेति तदापि संशयो न स्यादिति । नापि परतः, परो हि ज्ञानान्तरं वा अर्थक्रियानिर्भासो वा, तद्गोचरनान्तरीयकार्थदर्शनं वा तच्च सर्वं स्वतोऽगृहीतप्रामाण्यमव्यवस्थितं कथं पूर्वप्रवर्त्तकज्ञानं व्यवस्थापयेत् स्वतो वाऽस्य प्रामाण्ये प्रवर्त्तकज्ञानमपि तथैव स्यात् परस्याप्यन्यतः प्रामाण्ये त्वनवस्था प्रसज्येतेत्याशङ्कायामाह—

## प्रामाण्याप्रामाण्ये च स्वकारणवृत्तिगुणदोषापेक्षयोत्पत्तौ परत एव ॥

प्रामाण्याप्रामाण्ये चेति । स्वकारणेति, स्वस्य ज्ञानस्य यत्कारणं चक्षुरादिकारणकलापः तन्निष्ठौ यौ गुणदोषौ तावपेक्ष्य प्रामाण्याप्रामाण्ये भवत इति परमपेक्ष्योत्पद्यमानत्वादुत्पत्तिविषये ते परत एव भवत इति भावः, तेनार्थतथाभावप्रकाशकत्वरूपस्य प्रामाण्यस्य स्वज्ञानकारणातिरिक्तगुणानपेक्षत्वात्स्वत एवोत्पत्तिः, तथाहि कारणगता न ते गुणा उपलभ्यन्ते चक्षुरादीनां ज्ञानकरणानामतीन्द्रियत्वेन तद्गुणानां प्रत्यक्षतः प्रतिपत्त्यसम्भवात् नाप्यनुमानेन, इन्द्रियनिष्ठगुणैस्साकं कस्यापि लिङ्गस्य प्रत्यक्षतः प्रतिबन्धाग्रहेण प्रत्यक्षतो गृहीतव्याप्तिकलिङ्गाभावात । अनवस्थाप्रसरेणानुमानतो गृहीतव्याप्तिकलिङ्गाभावाच्च, लिङ्गनिष्ठव्याप्तिग्राहकानुमानस्याप्यनुमानान्तरतो गृहीतव्याप्तिकत्वात अनुमानान्तरस्यापि तथात्वादिति । किञ्चार्थतथात्वपरिच्छेदकशक्तिरूपं हि प्रामाण्यं, शक्तयश्च सर्वास्स्वत एव भवन्ति, नोत्पादककारणकलापाधीनाः, यथाहि मृत्पिण्डे वर्त्तमाना रूपादयो मृत्पिण्डादुपजायमाने घटेऽपि कार्ये तत एवोत्पद्यन्ते, न तु कारणेष्वविद्यमानाः कार्यधर्माः कारणेभ्यः कार्ये उदयमासादयन्ति किन्तु स्वत एव, घटस्यैवोदकाहरणशक्तिवत्, तथा ज्ञानेऽप्यर्थतथात्वपरिच्छेदशक्तिश्चक्षुरादिष्वविद्यमाना न तस्मादुपजायते किन्तु स्वत एवेति मतमपास्तम्, अर्थतथाभावप्रकाशकत्वरूपप्रामाण्यस्य स्वत एवोत्पत्तौ निर्हेतुकत्वेन देशकालस्वभावप्रतिनियमानुपपत्तेः गुणवच्चक्षुरादिसत्त्वे यथावस्थितार्थप्रतिपत्तेस्तदभावे च

तदभावस्य दृष्टत्वेन तद्धेतुकत्वव्यवस्थापनात्, कार्यकारणभावस्यान्वयव्यतिरेकनिबन्धनत्वात्, अन्यथा दोषवच्चक्षुराद्यन्वयव्यतिरेकसत्त्वेऽप्यप्रमाणत्वस्यापि स्वत एवोत्पत्तिः प्रसज्येत, न चेष्टापत्तिरपसिद्धान्ततापसङ्गात् । प्रत्यक्षादितोऽनुपलभ्यमानानामपि स्वकारणचक्षुरादिगतदोषाणामप्रामाण्योत्पत्तौ कारणत्वमिव गुणानामपि चक्षुरादिनिष्ठानां
5 प्रामाण्योत्पत्तिकारणत्वे बाधकाभावाच्च, शक्तिरूपप्रामाण्यमपि न स्वत उत्पत्तुमर्हति, तथा सत्यप्रामाण्यस्यापि अयथार्थपरिच्छेदकशक्तिरूपस्य केनचित्कर्तुमशक्तेस्तत्स्वत एव स्यात् तत्कारणेषु तिमिरादिदोषवत्सु चक्षुरादिषु तस्या अविद्यमानत्वात् । इन्द्रियादीनां स्वेष्वविद्यमानाया अपि ज्ञानरूपताया इव तादृशशक्तेरप्याविर्भावकत्वे बाधकाभावात् ज्ञानविशेषाणां स्वतोऽनुत्पत्त्या तन्निष्ठशक्तीनां स्वत एवोत्पत्त्यसम्भवाच्च, न च
10 शक्तयो ज्ञानव्यतिरिक्ताः, स्वाधाराभिमतभावकारणेभ्यो भावस्योत्पत्तावपि स्वाश्रयैस्ततोऽभवन्तीनां सम्बन्धासम्भवात् । भिन्नानां कार्यकारणभावातिरिक्तसम्बन्धासम्भवात् आश्रयाश्रयिभावस्यापि जन्यजनकभावनियतत्वात्, नापि धर्मधर्मिभावस्सम्बन्धः शक्तेरपारतन्त्र्ये धर्मत्वासम्भवात्, न चार्थतथाभावप्रकाशनरूपप्रामाण्यस्य स्वसामग्रीतो ज्ञानोत्पत्तावप्यनभ्युपगमे तद्विज्ञानस्य किं स्वरूपं ? नहि तद्व्यतिरेकेण विज्ञानस्वरूपं भवन्मते
15 सम्भवति, किञ्च तदुत्पत्तावपि तन्नोत्पद्यते पश्चाच्च तद्व्यतिरिक्तसामग्रीत उत्पद्यत इत्यभ्युपगमे विरुद्धधर्माध्यासात्कारणभेदाच्च भेदः स्यात्, तयोरेव भेदहेतुत्वेनाभ्युपगमादिति वाच्यम्, विज्ञानस्य चक्षुरादिसामग्रीजन्यत्वेऽपि नैर्मल्यादिसामग्र्यन्तरात्प्रामाण्यस्य पश्चादुत्पत्तेरनभ्युपगमात्, किन्तु गुणवच्चक्षुरादिसामग्रीत आगृहीतप्रामाण्यस्वरूपस्यैव विज्ञानस्योत्पत्त्यभ्युपगमात्, तस्मादेव च ज्ञानमिव तदव्यतिरिक्तस्वभावं प्रामाण्यमपि परत उच्यते,
20 तथा च प्रामाण्यं स्वोत्पत्तौ ज्ञानोत्पादककारणव्यतिरिक्तकारणान्तरापेक्षं तदन्वयव्यतिरेकानुविधायित्वात्, यच्चक्षुरादिव्यतिरिक्तस्यान्वयव्यतिरेकानुविधायि तत्तत्सापेक्षम्, यथाऽप्रामाण्यमिति प्रयोगेणोत्पत्तौ तस्य परापेक्षत्वं सिद्धम् । ननु भवतु प्रामाण्यमुत्पत्तौ परतः परश्च दोषाभाव एव स्यान्न गुणः, दोषसत्त्वे प्रामाण्यानुदयेन तदुदये तदभावस्यैव हेतुत्वौचित्यात्, तथा च ज्ञानहेत्वतिरिक्तभावानपेक्षत्वेनोत्पत्तौ तत्स्वत इत्युच्यत इत्याशंकायामुक्तं
25 स्वकारणवृत्तिगुणदोषेति, ज्ञानकारणातिरिक्तगुणदोषापेक्षयेति तदर्थः, तथा प्रामाण्ये गुणोऽप्रामाण्ये दोषो हेतुः, न तु प्रामाण्ये दोषाभावोऽन्यथा गुणसत्त्वेऽप्रामाण्यानुदयेन तदुदये गुणाभावस्यैव हेतुत्वौचित्यात्तस्यैव स्वतस्त्वापत्तिः स्यात्, न चाप्रामाण्यं प्रति दोषाणामन्वयव्यतिरेकौ स्त इति वाच्यम्, गुणानामप्यन्वयव्यतिरेकसम्भवात् । न च प्रामाण्ये गुणा दोषोत्सारणमात्रप्रयुक्तसन्निधिका न तु प्रामाण्ये निमित्ता इति वाच्यम्, दोषा गुणोत्सार-

णमात्रप्रयुक्तसन्निधिका नत्वप्रामाण्ये निमित्ता इत्यपि तुल्यत्वात् दोषाभावस्य तुच्छस्य गुणनिष्पाद्यत्वासम्भवाच्च, सस्वभावत्वे वा व्यतिरिक्तत्वे कारकव्यापारस्यासम्भवः स्यादपसिद्धान्तश्च प्रसज्येत, तथा च पर्युदासवृत्त्या गुणात्मक एव दोषाभावोऽभ्युपगन्तव्यः तथा गुणाभावोऽपि दोषात्मकः, इति युक्तं गुणदोषाभ्यां प्रामाण्याप्रामाण्ये इति भावः ॥

ननु प्रमाणं प्रामाण्यनिश्चये नान्यापेक्षं यदि ह्यपेक्षेत तत्तदा किं गुणान् संवादं वाऽपेक्षेत, नाद्यः, स्वकारणगुणानां प्रत्यक्षादिप्रमाणाग्राह्यत्वात् यदि यो यः कार्यविशेषः स गुणवत्कारणपूर्वको यथा प्रासादादिविशेषः, कार्यविशेषश्च यथावस्थितपरिच्छेद इति स्वभावहेतुना गुणवत्कारणपूर्वकत्वं सिद्ध्यतीत्युच्यते तदपि न युक्तम्, परिच्छेदे यथावस्थितार्थपरिच्छेदत्वासिद्धेः, तथा हि शुद्धकारकजन्यत्वेन संवादित्वेन बाधारहितत्वेनार्थतथात्वेन वा तत्सिद्धिर्वाच्या, तच्च न सम्भवति, परिच्छेदस्य यथावस्थितार्थपरिच्छेदत्वे गुणवत्कारणजन्यत्वस्य गुणवत्कारणजन्यत्वे च यथावस्थितार्थपरिच्छेदत्वस्यापेक्षितत्वेन प्रथमेऽन्योऽन्याश्रयात् संवादार्थिनां विज्ञाने यथावस्थितार्थपरिच्छेदत्वसिद्धिमन्तरेण तत्पूर्वकप्रवृत्तेः प्रवृत्तिमन्तराऽऽर्थक्रियासंवादस्य तं विना यथावस्थितार्थपरिच्छेदत्वसिद्धेश्चासम्भवेन द्वितीये चक्रकापत्तेः, न तृतीयः, तुच्छस्वभावस्य बाधाविरहस्य सत्त्वेन ज्ञापकत्वेन वाऽनङ्गीकारात् पर्युदासवृत्त्या तदन्यज्ञानलक्षणस्य विज्ञानपरिच्छेदविशेषाविषयत्वेन तद्व्यवस्थापकत्वानुपपत्तेश्च । नापि चतुर्थः, अन्योन्याश्रयात्, अर्थतथाभावे सिद्धे तद्विज्ञानस्यार्थतथाभावपरिच्छेदत्वसिद्धिः, तत्सिद्धेश्चार्थतथाभावसिद्धिरिति । नापि संवादापेक्षया तज्ज्ञप्तिसिद्धिः, संवादकं समानजातीयं भिन्नजातीयं वा, यदि समानजातीयं तर्हि एकसन्तानप्रभवं भिन्नसन्तानप्रभवं वा, तत्र भिन्नसन्तानप्रभवस्य समानजातीयस्य संवादकत्वे देवदत्तघटविज्ञानं प्रति यज्ञदत्तघटान्तरविज्ञानस्यापि संवादकत्वं स्यात्, समानसन्तानप्रभवसमानजातीयज्ञानान्तरस्य संवादकत्वे च तस्यैकार्थविषयकत्वे संवाद्यसंवादकयोरविशेषः, एकविषयत्वेऽपि यथा प्राक्तनं विज्ञानं स्वसमानजातीयस्यैकसन्तानप्रभवस्योत्तरकालभाविनो विज्ञानस्य न संवादकं तथोत्तरमपि पूर्वस्येति, किञ्चोत्तरज्ञानं प्रमाणमिति कुतस्सिद्धं येन प्रथमस्य प्रामाण्यनिश्चा-

---

१. ननु नैर्मल्यादयो गुणाः प्रामाण्येऽनुपयोगिनः किन्तु तेभ्यो दोषाणामभावः समुन्मिषतीत्यत्राह दोषाभावस्येति, तस्य तुच्छस्वभावतया कार्यत्वधर्माधारत्वं न भवेदिति भावः, अवश्यमनुभूयते दोषाभावस्य कार्यत्वाधारत्वम्, अञ्जनादेश्चक्षुरादौ क्रियमाणस्य प्रतीतेः, तथा च दोषाभावस्य दोषप्रतियोगिगुणस्वरूपत्वं वाच्यं, व्यतिरिक्तत्वेऽनुभवबाधापत्तेः, अनुभूयते च पुरा चक्षुषी सदोषे समभूतामधुना लब्धिसम्पन्ने इति । यदि दोषाभावो निःस्वभावः स्यात्तर्हि भावान्तरविनिर्मुक्तस्य भावस्यैवाभावत्वप्रतिपादकत्वत्सिद्धान्तविरोध इत्याशयेनाह सस्वभावत्वे वेति ॥

यकं भवेत्, न चान्यस्मात्तथाविधात्, अनवस्थापत्तेः। न चोत्तरज्ञानस्य कारणशुद्धिपरिज्ञाना-
नन्तरभावित्वेन विशेषात्सम्भवति संवादकत्वमिति वाच्यम्, कारणशुद्धिपरिज्ञानस्यार्थ-
क्रियापरिज्ञानं विनाऽसम्भवेन तत्र चक्रकदोषस्य दुर्वारत्वात् सम्भवे वा तस्यैव निश्चाय-
कत्वेनोत्तरकालभाविनः कारणशुद्धिज्ञानसमन्वितस्य प्रामाण्यहेतुत्ववर्णनं व्यर्थं स्यात्।
5 अथ भिन्नजातीयज्ञानान्तरस्य संवादकत्वे घटज्ञानस्यापि पटज्ञानप्रामाण्यनिश्चायकत्वा-
पत्तिः स्यात्, स्वस्मिंश्च प्रामाण्यनिश्चयाभावे प्रवृत्त्यभावेन तन्निश्चयस्यावश्यकत्वे चक्रक-
प्रसङ्गेनार्थक्रियाकारिरूपं भिन्नजातीयमपि न तन्निश्चायकम्, न च प्रामाण्यसंशयादपि
प्रवृत्तिसम्भवेनार्थक्रियाज्ञानसम्भव इति वाच्यम्, प्रामाण्यनिश्चयस्य निष्फलत्वापत्तेस्तदन्त-
रेणैव प्रवृत्तेः। प्रामाण्यनिश्चयमन्तरेण प्रवृत्तो विसंवादभाङ् मा भूवमिति ह्यर्थक्रियार्थी
10 प्रामाण्यनिश्चयाय कुरुते प्रवृत्तिं सा च तदन्तरेणापि संजातेति, अर्थक्रियाज्ञाने च प्रामा-
ण्यायान्यस्यापेक्षायामनवस्था भवेदित्याशंकायामाह—

**ज्ञप्तौ त्वनभ्यासदशापन्ने परतोऽभ्यासदशापन्ने च स्वत एवेति ॥**

ज्ञप्ताविति। तुशब्दः पूर्वस्माद्वैलक्षण्यप्रकाशकः, तदेवाहानभ्यासेति, ज्ञप्ताविति
विषयसप्तमी, ज्ञप्तिविषये तावदभ्यासदशापन्ने स्वमपेक्ष्य, अनभ्यासदशापन्ने च ज्ञाने परम-
15 पेक्ष्य प्रामाण्याप्रामाण्ये भवत इत्यर्थः, एवशब्देनोभयस्यापेक्षाविशेषेण स्वापेक्षत्वं परापेक्ष-
त्वञ्च व्यावर्तितम्। तथा च प्रामाण्याप्रामाण्ये अभ्यासदशापन्नज्ञाने स्वाश्रयग्राह्ये, अनभ्यास-
दशापन्ने तु परतो ग्राह्ये, अभ्यासानभ्यासौ ज्ञानावरणक्षयोपशमविशेषप्रयोज्यौ जाति-
विशेषावेव ज्ञानगतौ, विषयगतत्वन्तु तयोरुपचारात्, आत्मनः परिणामित्वेनोभयस्वभावात्,
तेन सर्वथा क्षणिकस्य नित्यस्य वाऽऽत्मनोऽभ्यासानभ्यासस्वभावत्वं कथमिति शङ्का परास्ता।
20 द्रव्यत्वस्य परिणामित्वव्याप्यत्वात्। प्रामाण्यग्राहकञ्च परं स्वाश्रयातिरिक्तं संवादज्ञानमेव,
कारणगुणबाधकज्ञानयोरप्येतन्मुखापेक्षित्वात्। कारणगुणानां संवादप्रत्ययमन्तरेण ज्ञातुम-
शक्यत्वात् संवादप्रत्ययतः कारणगुणपरिज्ञानाभ्युपगमे च तत एव प्रमाण्यनिश्चयस्यापि

१. अनभ्यासदशायामपि स्वगतं प्रामाण्यं यदि स्वयमेव ज्ञायेत यथार्थपरिच्छेदकमहमस्मीति तदेदं ज्ञानं प्रमाणं नवेति प्रामाण्यसंशयो न स्यादेव, ज्ञानत्वे संशयाभाववत्, न च निश्चितेऽपि प्रामाण्ये प्रमाणाप्रमाणसाधारणज्ञानत्वधर्मदर्शनेन विशेषादर्शनेन च संशयो भवतीति वाच्यम्, साधकबाधकप्रमाणतिरस्कारेण साधारणधर्मदर्शनस्य संशयं प्रत्यकारणत्वादन्यथा संशयानुच्छेदप्रसङ्गः स्यात् प्रकृते च स्वतः प्रामाण्यज्ञप्तिरूपस्य प्रामाण्यसाधकस्याप्रामाण्यबाधकस्य सत्त्वात् तस्मात्संशयानुरोधेन तत्र न स्वतो ग्राह्यं प्रामाण्यमिति भावः।
२. संवादकज्ञानञ्च यादृशोऽर्थः पूर्वस्मिन् विज्ञानेऽवगतस्स तादृश एवेति येन विज्ञानेन व्यवस्थाप्यते तत्, अत्र पक्षे कारणगुणज्ञानस्य बाधकाभावज्ञानस्य च संवादकज्ञानत्वेन प्रामाण्यनिश्चायकत्वे न क्षतिः॥

सिद्धत्वेन कारणगुणपरिकल्पनानर्थक्यात् । न चैकदा संवादप्रत्ययेन निश्चित्य कारणगुणानन्यदा तन्निश्चयादेव तज्जन्यज्ञानस्य निश्चयो न तत्र पुनस्संवादापेक्षेति वाच्यम्, अतीन्द्रियेषु चक्षुरादिषु कालान्तरेऽपि संवादकज्ञानमन्तरा गुणानुवृत्तेर्निश्चेतुमशक्यत्वात्, न च संवादप्रत्ययात्प्रामाण्याभ्युपगमे संवादप्रत्ययस्याप्यपरसंवादप्रत्ययात्प्रामाण्यावगमेनानवस्थेति वाच्यम्, संवादप्रत्ययस्य संवादरूपत्वेनापरसंवादापेक्षाभावादनवस्थानवतारात्। न च प्रथमस्यापि 5 संवादापेक्षा मा भूदिति वाच्यम्, संवादजनकत्वस्यैव प्रामाण्यत्वेन तदभावे प्रामाण्यासम्भवात् अर्थक्रियाज्ञानरूपं संवादज्ञानन्तु साक्षादविसंवादि, अर्थक्रियालम्बनत्वात्, तस्य स्वविषयसंवेदनमेव प्रामाण्यं, तच्च स्वतस्सिद्धमिति नान्यापेक्षा । न चार्थक्रियाज्ञानस्याप्यवस्तुवृत्तिशङ्कायामन्यप्रमाणापेक्षयाऽनवस्था स्यादिति वाच्यम, अर्थक्रियाज्ञानस्यार्थक्रियानुभवस्वभावत्वेनार्थक्रियामात्रार्थिनां भिन्नार्थक्रियात एतज्ज्ञानमुत्पन्नं किं वा तद्व्यतिरेकेणेत्येवंभूतायाश्चिन्ताया 10 निष्प्रयोजनत्वात् निष्पन्नत्वाद्वाञ्छितफलस्य । एवञ्च संवादकज्ञानस्य परत्वे समानजातीयभिन्नजातीयैकसन्तानभिन्नसन्तानविकल्पकृतदोषाणां नोपनिपातः, उभयस्वीकारात्, देवदत्तघटज्ञाने समानजातीययज्ञदत्तघटज्ञानस्य, प्रथमप्रवृत्तजलज्ञाने भिन्नजातीयस्योत्तरकालभाविस्नानपानावगाहनाद्यर्थक्रियाज्ञानस्य, एकसन्तानगतेऽन्धकारकलुषितालोकप्रभवकुम्भज्ञाने निस्तिमिरालोकप्रभवकुम्भज्ञानस्य, भिन्नसन्ताने च समानजातीयकुम्भज्ञानस्योक्तस्य संवादकत्वस्वी- 15 कारात्, एकसन्तानेऽभिन्नविषये संवाद्यसंवादकभावाविशेषस्य मन्दप्रबलसामग्रीसमुत्पाद्यतयैव निरासात् । तथा न संवादकज्ञानात्प्रामाण्यनिश्चये चक्रको दोषः, संवादज्ञानेन प्रथमं प्रामाण्यं निश्चित्यैव प्रवर्त्तत इत्यनभ्युपगमात्, वह्निस्वरूपदर्शनेऽसत्येकदा शीतपीडितोऽन्यकार्यार्थं वह्निमद्देशमुपसर्पंस्तत्स्पर्शमनुभवति, कृपालुना वा केनचित्तद्देशं वह्नेरानयने तत्स्पर्शमनुभवति, तदाऽसौ वह्निस्वरूपदर्शनस्पर्शनज्ञानयोस्संबन्धमवगच्छति 'एवम्भूतो भाव एवम्भूतप्रयोज- 20 ननिर्वर्त्तक' इति, एवमवगतसम्बन्धोऽन्यदाऽनभ्यासदशायामनुमानात् 'ममाऽयं स्वरूपप्रतिभासोऽभिमतार्थक्रियासाधनः, एवंरूपप्रतिभासत्वात्पूर्वोत्पन्नैवंरूपप्रतिभासवदि' त्येवंरूपात्पूर्वदर्शनस्य प्रामाण्यं निश्चित्य प्रवर्त्तत इति चक्रकाभावात् । न च संशयात्प्रवृत्तौ तत्रार्थक्रियाज्ञानात्प्रामाण्यनिश्चयो विफल इति वाच्यम्, तत्रार्थक्रियाज्ञानजन्यप्रामाण्यनिश्चयस्य संशयापनयनफलत्वात् । संशयापगमस्य त्वभ्यासः प्रयोजनम् । एकदाऽर्थक्रियाज्ञानात् प्रामा- 25 ण्यनिश्चयेऽन्यदा प्रतिपत्तॄणां सुखेनैवाभ्यासात् स्वतः प्रामाण्यनिश्चयपूर्वकप्रवृत्तिसम्भवात् । न च संशयात्प्रवर्त्तमानस्य कथं प्रेक्षावत्त्वमिति वाच्यम्, अप्रेक्षावत्त्वस्यैवेष्टत्वात्, नहि कश्चिज्जात्या प्रेक्षावान् तदन्यो वा, प्रेक्षावरणक्षयोपशमविशेषस्य सर्वत्र सर्वदा सर्वेषामसम्भवात्, प्रक्षीणाशेषावरणादशेषवेदिनोऽन्यत्र क्वचित्कदाचित्कस्यचिदेव प्रेक्षावत्त्वादित्यलं पल्लवितेन ॥

तदेवं मत्यादिपञ्चविधं प्रत्यक्षपरोक्षरूपं सलक्षणं सभेदञ्च संक्षेपत आख्याय प्रमाण-विषयफलप्रमातृरूपेषु चतुर्विधेषु तत्त्वस्य परिसमाप्तेस्तद्विषयमभिधातुकाम आह—

**परिच्छेद्यमस्य प्रमाणस्य सामान्यविशेषाद्यनेकान्तात्मकं वस्तु ॥**

परिच्छेद्यमिति । परिच्छेत्तुं योग्यो विषय इत्यर्थः, परिच्छेद्यमस्यानेकान्तात्मकं
5 वस्त्विति योजना, अनेकान्तः कीदृश इत्यत्राह सामान्यविशेषादीति, सामान्यञ्च विशेषश्च सामान्यविशेषौ वक्ष्यमाणस्वरूपौ तावादिर्यस्य सः, सचासावनेकान्तश्च, स एवात्मा स्वरूपं यस्य तदिति विग्रहः, वस्तुपदेन बाह्योऽभ्यन्तरश्च भावराशिर्ग्राह्यः, नित्यानित्यभेदाभेदा-भिलाप्यानभिलाप्यादीनामादिना ग्रहणम् । ननु सत्त्वासत्त्वाद्यनेकान्तात्मकमिति कुतो नोक्त-मितरेषां तदधीनत्वादिति चेन्न, सत्त्वासत्त्वात्मकत्वस्य सप्तभङ्गीनिरूपणेनावगतप्रायत्वात्,
10 सामान्यशब्देन द्रव्यबोधकेन नित्यत्वस्य पर्यायवाचिविशेषशब्देनोत्पादव्यययोश्च लाभेनोत्पा-दव्ययध्रौव्यात्मकत्वस्यापि वस्तुनि लाभाच्च तथोपन्यासः । ननु कथं सामान्यविशेषात्मकत्वं वस्तुनस्सम्भवति, सामान्यं ह्येकं, अनेके विशेषाः, नित्यं सामान्यं, अनित्या विशेषाः, निरव-यवं सामान्यं, सावयवा विशेषाः, अक्रियं सामान्यं, सक्रिया विशेषाः, सर्वगतं सामान्यं, असर्वगता विशेषाः, तथा च वस्तु यदि सामान्यरूपं कथं विशेषरूपम्, अथ विशेषरूपं
15 कथं सामान्यरूपम्, तदुभयरूपत्वे च वस्तुनस्सकललोकप्रसिद्धव्यवहारनियमोच्छेदप्रसङ्गः, तथाहि विषमोदकक्षीरादिव्यक्त्यभिन्नमेकं सामान्यं यदि वर्त्तेत तर्हि विषं विषमेव, मोदको मोदक एवेति न स्यात्, मोदकाभिन्नसामान्याभिन्नत्वात् विषस्य, विषाभि-न्नसामान्याभेदात् मोदकस्य, अपि तूभयमुभयरूपं स्यात् ततश्च विषे मोदके च विषार्थी प्रवर्तेत, मोदके विषे च मोदकार्थी, लोके च विषार्थी विष एव प्रवर्त्तते, मोदकार्थी
20 मोदक एवेत्यस्य नियमस्योच्छेदः, तथा विषे भक्षिते मोदकोऽपि भक्षितस्स्यात् मोदके भक्षिते विषमपि, तथा च सति प्रतीतिविरोध इति चेन्मैवम्, सामान्यविशेषात्मकवस्तुनोऽ-नुभवसिद्धत्वात्, घटेषु घटो घट इत्यनुवृत्तप्रत्ययस्य ताम्रो मार्त्तिकस्सौवर्णइत्येवं व्यावृ-

१. तथा च प्रयोगो जीवादिधर्मी अनन्तधर्मात्मकः प्रमेयत्वान्यथानुपपत्तेरिति, न च धर्मे व्यभिचारः, तस्याप्यनन्तधर्मात्मकत्वे धर्मित्वप्रसक्तेः इष्टापत्तौ न धर्मो स्यात्कोऽपि, धर्माभावादिति वाच्यम्, सर्वथा धर्मस्यैव कस्यचिदसम्भवात्, विवक्षितधर्म्यपेक्षया हि सत्त्वादिर्धर्मः, स स्वधर्मान्तरापेक्षया धर्म्यपि, न चानवस्था, अनाद्यनन्तत्वाद्धर्मधर्मिस्वभावभेदव्यवहारस्य । न च साधनस्य प्रमेयत्वस्यानन्तधर्मशून्यत्वे तेनै-वानेकान्तः, तस्यानन्तधर्मात्मकत्वे धर्मित्वेन पक्षान्तर्गतत्वान्न हेतुत्वमिति वाच्यम्, धर्मिणो जीवादेरुपो-द्भियमाणस्य प्रमेयत्वादेर्धर्मस्य नयविषयस्य नयत्वेनाप्रमेयत्वाद्व्यभिचाराभावात् व्यभिचारलक्षणे साध्याभाव-तद्वृत्तित्वयोरेकावच्छेदेन प्रवेशादिति बोध्यम् ॥

त्प्रत्ययस्याबाध्यमानस्य प्रतिप्राणि प्रतीतत्वात् न चायं भ्रान्तः प्रत्ययः, अर्थसामर्थ्यजन्यत्वात्, अर्थविज्ञानसद्भावाद्धि तन्निश्चयो नार्थसद्भावमात्रात् सर्वार्थानामपि सद्भावस्याविशेषेण सर्वेषां सर्वज्ञत्वप्रसङ्गात्, उपजायते च ज्ञानं सामान्यविशेषाकारमेव, एकादिस्वभावं सामान्यमनेकादिस्वरूपो विशेष इति तु युक्तिविरहान्नाभ्युपगम्यते, एकादिस्वभावं हि सामान्यं किमनेकेषु विशेषेषु सर्वात्मना देशेन वा वर्त्तेत, न तावत्सर्वात्मना, आनन्त्यप्रसङ्गात् विशेषाणामनन्तत्वात् एकत्रैव सर्वात्मना वृत्तौ तद्भिन्नविशेषाणां सामान्यशून्यत्वापत्तेः, अनन्तत्वे चैकत्वविरोधात् नापि देशेन, सदेशत्वप्रसङ्गात्, नापि गगनवद्व्यापित्वाद्वर्त्तेत इति साम्प्रतं कार्त्स्न्यदेशव्यतिरेकेण वृत्त्यदर्शनात् नभसस्सप्रदेशत्वेन न तद्वृत्तिरुभयव्यतिरिक्ता, अनेकत्र वृत्तेरनेकत्वं व्यापकं तद्विरुद्धं सर्वथैकत्वं सामान्ये त्वयाभ्युपगम्यते ततो नानेकवृत्ति स्यात् विरोध्येकत्वसद्भावे तु व्यापकस्यानेकत्वस्य निवृत्त्या व्याप्यस्यानेकवृत्तित्वस्यावश्यं निवृत्तिः स्यात् न च यदि नित्यं व्याप्येकं निरवयवं सामान्यवस्तु न स्यान्न तदा देशकालस्वभावभेदभिन्नेषु घटशरावादिषु विशेषेषु सर्वत्र मृन्मृदित्यभिन्नौ बुद्धिशब्दौ स्याताम्, न ह्यत्यन्तभिन्नेषु जलादिषु मृन्मृदित्येकाकारा बुद्धिर्भवति नाप्येकाकारः शब्दः प्रवर्त्तते, ततोऽभिन्नबुद्धिशब्दप्रवृत्तिनिमित्तस्य सामान्यस्य तादृशस्य सत्त्वमवश्यमाश्रयितव्यमिति वाच्यम्, तन्निबन्धनस्यास्माभिरनिषेधात् किन्त्वेकत्वादिधर्मयुक्तपरपरिकल्पितसामान्यस्यैव निषेधात्। अनेकान्तधर्मात्मकवस्तुनस्समानपरिणामस्यैव तादृशबुद्धिशब्दनिबन्धनत्वात् तुल्यज्ञानपरिच्छेद्यवस्तुरूपस्य समानपरिणामस्य विलक्षणत्वेन न वृत्तिविकल्पप्रयुक्तदोषसम्भवः, अस्यैव समानभावत्वोपपत्तेः, समानानां भावस्सामान्यमिति, समानैस्तथा भवनमित्यन्वर्थयोगात्, अर्थान्तरभूतभावस्य तद्व्यतिरेकेणापि तत्समानत्वेऽनुपयोगात्, अन्यथा समानानामित्यभिधानाभावादयुक्तैव तत्कल्पना। समानत्वञ्च भेदाविनाभाव्येव तदभावे च सर्वथैकत्वतत्समानत्वानुपपत्तिरिति समानपरिणाम एव समानबुद्धिशब्दद्वयप्रवृत्तिनिमित्तम्, अत एव य एवासावेकस्मिन् विशेषे स एव विशेषा-

---

१. अनुभवसिद्धत्वमेव विशदयति अर्थविज्ञानसद्भावाद्धीति ॥ २. नार्थसद्भावोऽर्थसद्भावादेव कारणान्निश्चीयत इति भावः ॥ ३ आकाशस्य निष्प्रदेशत्वेऽयं दोषः तथाहि येन देशेन तद्विन्ध्येन संयुक्तं तेनैव देशेन हिमवदादिभिस्संयोगे विन्ध्यहिमवदादीनामेकत्रैवावस्थानं स्यात् अन्यथा निष्प्रदेशैकाकाशसंयोग एव न स्यात्। अन्येन देशेन संयोगे तु सप्रदेशत्वमेव। किञ्च यत्र विन्ध्यस्य सत्त्वं यत्र वा तस्याभावस्तयोराकाशभागयोस्सर्वथाऽनन्यत्वे यत्र विन्ध्यस्य भावस्तत्राप्यभावः स्यात् विन्ध्यवन्नभोभागस्य विन्ध्याभाववन्नभोभागानतिरिक्तत्वात् कथञ्चिदभेदेऽनेकान्तवादप्रवेशः सर्वथा भेदेऽन्यतरस्यानभोभागत्वप्रसङ्गः। अथ कथञ्चित्तर्हि स्वदर्शनपरित्यागो दोष इति ॥

न्तर इति न, किन्तु समान इति, न चैवं सति विशेषाणां परस्परविलक्षणत्वान्न स्यात्स-
मानबुद्धिशब्दद्वयप्रवृत्तिरिति वाच्यम्, वैलक्षण्ये सत्यपि समानपरिणामसामर्थ्यात्प्रवृत्तेः।
असमानपरिणामनिबन्धना चेह विशेषबुद्धिः। समानपरिणामस्यासमानपरिणामाविनाभूतत्वेन
यत एव वस्तु सामान्यरूपं तत एव विशेषरूपम्। यत एव च विशेषरूपमत एव च सामा-
5 न्यरूपम्, न चानयोर्विरोधः, समानासमानपरिणामयोरुभयोरपि संवेदनस्योभयरूपत्वात्
सोऽयं समानपरिणामो न विशेषादर्थान्तरं सर्वथैकस्वभावं वा, येन सकललोकप्रसिद्धसंव्य-
वहारनियमोच्छेदप्रसङ्गस्स्यात्। किन्तु भेदाविनाभूतत्वात्स एव विषादभिन्नो न स एव
मोदकादिभ्योऽपि, सर्वथा तदेकत्वे समानत्वायोगात्। न च समानपरिणामस्यापि प्रतिवि-
शेषमन्यत्वेऽसमानपरिणामवत्तद्भावानुपपत्तिरिति वाच्यम्, परिणामस्यान्यत्वे सत्यपि समा-
10 नासमानपरिणामयोर्भिन्नस्वभावत्वात् समानबुद्धिशब्दप्रवृत्तिनिमित्तस्वभावो हि समानप-
रिणामः, विशिष्टबुद्धिशब्दजननस्वभावो विशेष इति। तस्माद्वस्तु सामान्यविशेषोभयात्म-
कमेवेति सिद्धम्। एवं नित्यानित्यात्मकत्वमप्यध्यक्षेणावगम्यते, अन्यथा वस्त्ववगमाभावः
प्रसज्येत, तथाहि—अप्रच्युतानुत्पन्नस्थिरैकस्वभावं सर्वथा नित्यमभ्युपगम्यते यदि तर्हि
तद्वस्तु विज्ञानजननस्वभावं वा स्यादजननस्वभावं वा, यदि प्रथमः, तदा सर्वत्र सर्वदा
15 सर्वेषां तद्विज्ञानप्रसङ्गः, तस्यैकस्वभावत्वात्, न ह्येवं दृश्यते, क्वचित्कदाचित्कस्यचि-
देव तद्विज्ञानस्योदयात्। न च तस्य सर्वथैकस्वभावत्वेऽपि देशादिकृतविशेषात्तथेति
वाच्यम्, प्राक्स्वभावविनिवृत्तिं विना विशेषासम्भवेन तद्भावेऽनित्यत्वप्रसङ्गात्। नापि
सहकारिणमपेक्ष्य तज्जनयतीति वाच्यम्, एकान्तनित्यस्यापेक्षाऽयोगात्। सहकारिणा क्रिय-
माणस्य विशेषस्य ततोऽर्थान्तरत्वे नित्यस्य वस्तुनस्तेन प्रयोजनाभावात् वस्तुनस्तदव-
20 स्थत्वात्, वस्तुनि तस्य किञ्चित्कारित्वाभावात् किञ्चित्कारित्वे च तदिदं भिन्नमभिन्नं वेत्या-
वृत्त्यानवस्थापातात्। विशेषस्यानर्थान्तरभूतत्वे स विशेषो विद्यमानः क्रियमाणो भवत्य-
विद्यमानो वा, नाद्यो विद्यमानः कथं क्रियते, करणे वा भूयो भूयः करणं स्यात् विद्यमान-
त्वाविशेषात्, नाप्यविद्यमानः क्रियते व्याहतत्वात्, स तस्मादभिन्नोऽविद्यमानश्चेति, करणे
वाऽनित्यत्वापत्तिः क्रियमाणे च तस्मिन् पदार्थस्यैव क्रियमाणत्वात् तस्य तदभिन्नत्वात्।
25 विशेषस्याकरणे च स न तत्सहकारी स्यात् अकिञ्चित्करत्वात्। अकिञ्चित्करस्यापि सह-
कारित्वे सर्वभावानामेव तत्सहकारित्वप्रसङ्गः स्यात्, न च वस्तुन एव तथास्वभावो यद्-
विशेषमकुर्वाणमेव प्रतिनियतं सहकारिणमपेक्ष्य कार्यकरणमिति न कश्चिद्दोष इति

१. एवञ्च विषार्थी विष एव प्रवर्त्तते, तद्विशेषपरिणामस्यैव तत्समानपरिणामाविनाभूतत्वात्, न तु मोदके तद्विशेषपरिणामस्य, तत्समानपरिणामाविनाभावाभावादिति बोध्यम्॥

वाच्यम्, कार्यकरणावस्थायां तस्य सहकार्यपेक्षालक्षणस्वभावव्यावृत्तावनित्यत्वप्रसङ्गात् स्वभावव्यावृत्तौ तदभिन्नस्वभाववतोऽपि व्यावृत्तताया आवश्यकत्वात्। अव्यावृत्तौ[1] च पूर्व इवेदानीमपि कार्याकारित्वप्रसङ्गात् स्वभावापरावृत्तेः, सर्वदा वा जननप्रसङ्गस्स्यादिति नैकान्तनित्यपक्षे विज्ञानादिकार्याजननेन तदवगमसम्भवः। अथ स्वभावादेकक्षणस्थिति-धर्मकमेकान्तानित्यं वस्त्वित्यभ्युपगम्यते तदापि विज्ञानादिकार्यायोगान्न तदवगमसम्भवः, 5
न च सर्वथा एकक्षणस्थितिधर्मिणो विज्ञानादिजनकत्वमुपपद्यते, तस्यैवायोगात्। तथाहि क्षणस्थितिधर्मकं नाम क्षणस्थितिस्वभावं तथा चास्य द्वितीयादिक्षणेष्वस्थितिः स्यात् तत्र तयोः स्थित्यस्थित्योः परस्परमन्यत्वमनन्यत्वं वा, यद्यन्यत्वं सर्वथा तदा द्वितीया-दिक्षणेष्वपि स्थितिप्रसङ्गः[2], अन्यथा द्वितीयादिक्षणास्थित्या प्रथमस्थितेरेकान्तभेदो न भवेत्, अनन्तराक्रान्तविग्रहाणां भावानामस्थित्यैकान्तभिन्नया वर्त्तमानसमयभाविभावानां 10
स्थितेरविरोधात्। कथञ्चिदन्यत्वे चानेकान्तवादापत्तेः। यदि तयोस्सर्वथाऽनन्यत्वं तदा प्रथमक्षणस्थितेरेव द्वितीयादिक्षणास्थितिरूपतया तस्याश्च भावात्मकत्वेन द्वितीयादिक्षणे-ष्वपि स्थितेरापत्तेः। द्वितीयादिक्षणास्थितेर्निरुपाख्यत्वेन तद्रूपत्वात्प्रथमक्षणस्थितेः प्रथम क्षणेऽप्यभावप्रसङ्गाच्च। कथञ्चिदभेदे चानेकान्तवादापत्तेः। न च स्थित्यस्थित्योर्भेदा-[3]भेदकल्पनाऽयुक्ता, अस्थितेरभावरूपत्वादिति वाच्यम्, भेदाभेदयोरभावपरिहारेणावृत्तेः। 15
न च तदुत्तरकालभाविपदार्थान्तरस्थितिरेव[4] विवक्षितस्य द्वितीयादिक्षणास्थितिर्नान्या काचनास्थितिर्येन भेदाभेदकल्पना स्यादिति वाच्यम्, तथा सति सुतरामन्यत्वानन्यत्व-कल्पनाप्रसरेण पूर्वोदितदोषस्या[5]निवार्यत्वात्। न च परिकल्पिता द्वितीयादिक्षणास्थितिर्नातो भेदाभेदकल्पनेति वाच्यम्, तथात्वे च द्वितीयादिक्षणेष्वपि[6] स्थित्यापत्तेः। न च द्वितीयादिक्षणा-स्थितौ सत्यां प्रथमक्षणस्थितेरसम्भवात् सम्भवे वा तदनुपपत्तेः प्रतियोग्यभावेन भेदाभेद- 20
कल्पनाऽसम्भवान्नोक्तदोषप्रसङ्ग इति वाच्यम्, अस्थितेस्तद्धर्मत्वप्रसङ्गस्य दुर्वारत्वात्, स्थित

---

१. कार्याजननकाले य एव स्वभावस्स एवेदानीमिति कथं जनयति कथं वा पूर्वमपि न जनयति। सहकारिणा सह जननस्वभावत्वमतस्तत्सद्भावे जनयत्यन्यथा नेति चेत्सोऽयमपि स्वभावो यदि नित्यस्तदा सदा जननप्रसङ्गः अजनयतश्च कथं सदा तत्स्वभावत्वं, तस्माद्यदा यद्भवति तदा तेन सह तज्जननस्वभावं न तु सदेत्यङ्गीकर्त्तव्यमेवञ्च स्वभावभेदे कथमेकान्तनित्यतेति भावः॥ २. यथा प्रथमक्षणवर्तिघटपटादीनां याः स्थितयस्ता अन्यत्वान्न परस्परं विरुद्धास्तथाऽन्यत्वाविशेषादस्थितिकालेऽपि तस्य स्थितिः स्यादिति भावः॥ ३. स्थित्यस्थिती परस्परं भिन्ने भवतोऽभिन्ने वेति शङ्का न संभवति अस्थितेरभावरूपत्वादिति शङ्काशयः समाधानाशयस्तु भेदाभेदप्रकारौ अभावादन्यत्रैव भवत इति यदि नियमः स्यात्तदैवं भवेत् न त्वेवमस्तीति॥ ४. प्रथमक्षणादुत्तरकालभावीत्यर्थः॥ ५. अन्यत्वे उत्तरकालीनपदार्थान्तरस्थितिक्षणेऽपि प्रथमकालभाविप-दार्थक्षणस्थितिप्रसङ्गः, अनन्यत्वे तु तयोरन्यतरस्याः सत्त्वप्रसङ्ग इति॥ ६. द्वितीयादिक्षणस्थितेः परिकल्पि-तत्वेनासत्त्वादिति भावः॥

एव ह्यस्थितो भवति तथा च यथा स्थितत्वं तद्धर्मस्तथाऽस्थितत्वमपीति, अतद्धर्मत्वे वा स्थित्यापत्तेः। ततश्च स्वहेतुभ्य एव स्थित्यस्थितिधर्मकं समुत्पद्यत इति प्रतिपत्तव्यम्, न चाक्रमवतः कारणात्क्रमवद्धर्माध्यासितकार्योत्पत्तिर्युज्यते तथा च यदैव स्थितिस्तदैवास्थितिः स्यात् कुतः क्षणस्थितिधर्मकत्वमतो न विज्ञानादिकार्ययोगः, नित्यानित्यं पुनः कथञ्चिदवस्थितत्वादनेक-
5 स्वभावत्वाज्जनयति विज्ञानादिकमतोऽवगम्यते, नित्यानित्यत्वञ्च वस्तुनो द्रव्यपर्यायोभयरूपत्वादनुवृत्तव्यावृत्ताकारसंवेदनग्राह्यत्वात्प्रत्यक्षसिद्धमेव। न चास्य स्वसंवेद्यस्यापि संवेदनस्यापह्नवः कर्त्तुं युज्यते प्रतीतिविरोधात, न चेदं भ्रान्तम्, देशान्तरे कालान्तरे नरान्तरेऽवस्थान्तरे च मृत्पिण्डादिषु तादृशसंवेदनस्य प्रवृत्तेरिति। एवं भेदाभेदात्मकमपि वस्तु प्रत्यक्षेणावगम्यते, तथाहि मृन्मृदित्यनुगताकारप्रत्ययवेद्यं वस्तुनो रूपमभेदः, तस्य
10 यच्छिवकस्थासकघटकपालादिना भेदेन भवनं स भेदः, अभेदस्यैव च भेदरूपेण भवनादविरोधेन तदुभयस्वरूपत्वं वस्तुनः। नन्वभेदस्य भेदेन भवनमसङ्गतम्, एकस्वभावत्वं ह्यभेदो नानारूपत्वञ्च भेदस्तयोस्तु परस्परं विरोधान्नैकत्र तौ सम्भवतः, ततो यद्ययमभेदस्तदा न कदाचिद्भेदो भवेत् भावानां स्वभावान्यथात्वाभावात्, न च भावस्स्वस्वभावापरिहारेणैव भेदरूपतामासादयतीति वाच्यम्, भेदाभेदयोः परस्परविरुद्धयोरेकस्वभावत्वायोगात भेदो-
15 पलम्भस्याभेदप्रतिषेधाऽऽवेदकत्वात्। अन्यथा एतत्सकलस्तम्भेभकुम्भाम्भोजभास्करादिकमेकस्यैव ब्रह्मणो रूपमित्यपि स्यात्। तस्मान्नाभेदो भेदमासादयति, तन्न युक्तम्, सर्वथा भेदाभेदयोर्हि स्याद्विरोधोऽयन्तु भेदोऽभेदश्च विलक्षणः, स्यादभेदस्य स्याद्भेदे को विरोधः ? यत एव ह्ययं भेदो भवत्यत एव स्यादभेदः, न च भेद एव कुतो नेति वाच्यम् सर्वथा नानात्वाभावात्, प्रमाणाधीना हि प्रमेयव्यवस्था, ततस्तत्र यस्सर्वथैकरूपतः प्रकाशतेऽसा-
20 वभेदो भवति, सर्वथा नानारूपतया तु प्रतिभासमानो भेदः, यस्तु न सर्वथैकरूपः प्रकाशते न च सर्वथैव नानास्वभावः स नाभेद एव न च भेद एव अपितु भेदाभेदाख्यं जात्यन्तरमेवेदम्, दृश्यते हि द्रव्यपर्याययोस्संख्यासंज्ञालक्षणकार्यभेदाद्भेदो देशकालस्वभावाभेदाच्चाभेदः, एको हि घटो रूपादयो बहव इति संख्याभेदः घटो रूपादय इति संज्ञाभेदः, अनुवृत्तिलक्षणं द्रव्यं नित्यञ्च, व्यावृत्तिलक्षणाः पर्यायाः क्षणिकाश्चेति

१. अभ्यन्तरीकृतपर्यायत्वाद् द्रव्यात्मना नित्यं, अभ्यन्तरीकृतद्रव्यत्वात्पर्यायात्मनाऽनित्यमित्यर्थः, ननु पर्यायनिवृत्तौ द्रव्यनिवृत्तिर्भवति न वा, आद्ये निवृत्तिमत्त्वात्तदनित्यमेव, पर्यायस्वात्मवत्, अन्त्ये च पर्यायनिवृत्तावपि तस्यानिवृत्त्या तेभ्योऽन्यदेव द्रव्यं स्यात् क्रमेलकादिव कर्कः, मैवम् कथञ्चिन्निवृत्तिभावात् इतरेतरविनिर्मुक्तस्योभयस्याग्रहणाद्धि द्रव्यपर्यायोभयरूपं वस्तु ऊर्ध्वाद्याकाररहितस्य च मृद्द्रव्यस्यासम्भवात् कपालकालेऽपि घटपर्यायबुद्ध्या मृदनुभूयते मृन्निवृत्तौ तूर्ध्वादिपर्यायवन्नानुभूयेत एवमूर्ध्वाद्याकारस्यापि मृद्द्रव्यरहितस्यासम्भवः, न ह्यद्रव्या घटादिपर्यायास्सन्ति ॥

लक्षणभेदः, घटेनोदकाहरणं क्रियते, रूपादिभिस्तु वस्तुराग इति कार्यभेदः, देशादिभिस्त्व-भेदः, न च स्वभावतो भेदाभावे धर्मधर्मिणोस्संख्यादितोऽपि कथं भेदस्स्यादिति वाच्यम्, द्रव्यपर्याययोर्हि स्वभावभेदे प्रतिषिद्धे सत्यभेदः साध्यः, स च सम्बन्धः। सम्बन्धश्चैकस्यै-वात्मनो न सम्भवति द्वयनिष्ठत्वादस्य, नहि घटो घटादभिन्न इति कदाचिदपि व्यवहारः प्रवर्त्तमानस्समुपलभ्यते, न चैकत्रापि दृष्ट एव व्यवहारो यथा घटस्य तत्स्वरूपस्य चाभेद 5 इतीति वाच्यम्, तत्रापि कथञ्चिद्भेदाश्रयणात् घट इति धर्मिवचनश्शब्दः, स्वरूपन्तु स्वं रूपं स्वरूपमिति तस्यैव भावस्यानित्यत्वादिरूपं धर्ममाह, तस्माद्द्रव्यपर्याययोरयमेव स्वभाव-विशेषो यन्नेतराननुविद्धमेकस्यापि किञ्चिदात्मीयं रूपम्, अत एव न तद्द्रव्यमित्येव व्यप-दिश्यते नापि पर्याया इत्येव, किन्तु सप्तभङ्ग्या प्राङ्निरूपितया, इत्थमेव वस्तुस्वरूपतोपपत्तेः। न च संख्यादयः पररूपा भिद्यमाना अपि कथमात्मभूतमभेदं न बाधितुं समर्था इति वाच्यम्, 10 यतो नास्माकं नैयायिकादीनामिवैकान्तेन भावव्यतिरेकिणः केचित्संख्यादयोऽपि, किन्तु स एव भावो भेदाभेदतया व्यवस्थितः कदाचिदनेकत्वप्राधान्येन विवक्ष्यते कदाचिदेकत्व-प्राधान्येन, ततो यदाऽनेकत्वप्राधान्येन विवक्षितस्तदा स एव रूपादिपर्यायात्मको भवति, एकत्वप्राधान्येन विवक्षितस्तु स एव द्रव्यमिति, तदेवं प्रमाणप्रतिपन्नत्वेन भेदाभेदात्मकं वस्त्विति ॥ एवमुत्पादव्ययध्रौव्ययुक्तत्वं वस्तुनः, न चोत्पादव्यययोर्ध्रौव्येण विरोध इति 15 वाच्यम्, कथञ्चिदुत्पादव्यययोः कथञ्चिद् ध्रौव्यस्य च स्वीकारात् न च यथोत्पादव्ययौ न तथा ध्रौव्यं यथा ध्रौव्यं तथा नोत्पादव्ययाविति नैकं वस्तु यथोक्तलक्षणं स्यात्, यद्धि यत्प्रकारव्यवच्छेदेन व्यवस्थाप्यते न तत्र तत्प्रकारसम्भवः यथा नीलप्रकारव्यवच्छेदेनानील-प्रकारव्यवस्थायां पीते। अस्ति चोत्पादव्ययव्यवच्छेदेन ध्रौव्यव्यवस्थापनं ध्रौव्यव्यवच्छेदेन चोत्पादव्ययव्यवस्थापनम्, उत्पादस्य वस्तुभावत्वात् विनाशस्य व्ययत्वात्, अन्वितरूपस्य 20 ध्रौव्यत्वादिति भिन्नप्रकारत्वं तेषामिति वाच्यम्, एकान्तोत्पादव्ययध्रौव्याणामनभ्युपगमात्

१. अत्र स्थित्यादीनां हि वस्तुनो यद्यभेदस्तदा स्थितिरेवोत्पत्तिविनाशौ, विनाश एव स्थित्युत्पत्ती, उत्प-त्तिरेव च विनाशावस्थाने इति प्राप्तम्, एकस्मादभिन्नानां स्थित्यादीनां भेदविरोधात् तथा च कथं त्रिलक्षणत्वं स्यात्, अथ भेदस्तर्हि प्रत्येकं स्थित्यादीनां त्रिलक्षणत्वप्रसङ्गः, सत्त्वात्, अन्यथा स्थित्यादीनामसत्त्वापत्तेः, तथा चानवस्था स्यादिति पूर्वपक्षः, पक्षद्वयमपि कथञ्चिदिष्टमस्माकम्, तत्र स्थित्यादिमतस्सकाशात्कथञ्चिद भेदोपगमे स्थित्यादीनां स्थितिरेवोत्पद्यते, उत्पद्यमानद्रव्याभेदसामर्थ्याच्च विनश्यति, विनाश एव तिष्ठति, सामर्थ्यादुत्पद्यते च उत्पत्तिरेव नश्यति सामर्थ्यात्तिष्ठतीति च ज्ञायते, इति त्रिलक्षणजीवादिपदार्थाभिन्नानां स्थित्यादीनामपि त्रिलक्षणत्वसिद्धेः, एतेनैव च ततस्तेषां भेदोपगमेऽपि प्रत्येकं त्रिलक्षणत्वसिद्धिः, न चानवस्था, सर्वथा भेदपक्षे तत्प्रसक्तेः, न स्याद्वादपक्षे, येन हि स्वभावेन त्रिलक्षणात्सत्त्वादभिन्नाः स्थित्यादयस्तेन प्रत्येकं त्रिलक्षणाः, पर्यायार्पणात्परस्परं तद्वतश्च भिन्ना अपीष्यन्ते, तथा प्रतीतेर्बाधकासम्भवादित्युत्तरपक्षः॥

किन्तु स्याद्वादं निष्कलङ्कितमतिसमुत्प्रेक्षितमाश्रित्य कथञ्चिदेव तद्व्यवस्थापनाङ्गीकारात्। एकान्ताभ्युपगमे ह्युत्पादव्ययध्रौव्याणां यथोक्तो व्यवच्छेदस्सम्भवत्यन्यथा विरोधायोगात्। स्याद्वादाश्रयणात्तु नान्यव्यवच्छेदेनान्यव्यवस्थापनं किन्तु यत एव तद् ध्रौव्यमुत्पादव्ययानुविद्धमत एव तत्कथञ्चिद् ध्रौव्यमुत्पादव्ययावपि, यत एव ध्रौव्यानुविद्धावत एव तौ
5 कथञ्चिदुत्पादव्ययाविति। ननु कोऽयमनुवेधो नाम, किमभेदो भेदो भेदाभेदो वा, नाद्यः एकरूपतापत्तेः, अन्यथा तदयोगात्, भेदे तु भिन्नमेव रूपद्वयं स्यात्, भेदाभेदपक्षस्तु विरोधव्याहत इति तन्न, अभिप्रायापरिज्ञानात्, यतो यदेतद् ध्रौव्यमप्रच्युतानुत्पन्नस्थिरैकरूपं न भवति, अपि तु परिणामात्मकं तदुत्पादव्ययावप्युच्यते, न पुनस्तावितो व्यतिरिक्तावेव कौचिदपि स्तः, अत एवोत्पादव्ययावपि यौ तौ नात्यन्तिकभिन्नौ, किन्तु वस्तुन एव परिणामा-
10 त्मकौ तौ ध्रौव्यमप्युच्येते, न पुनस्तदपि किञ्चिदेतद्व्यतिरिक्तमस्तीति, तदेवं या यथोक्तरूपता वस्तुनस्सोऽयमनुवेधः न पुनरत्र भिन्नस्य कस्यचिदभेदापादनमत्यन्तभेदो वा, तस्मादुत्पादव्ययध्रौव्यात्मकमेव वस्तु इति, इतरथा वस्त्वेव तन्न स्यादिति ॥ एवमभिलाप्यानभिलाप्यात्मकं वस्तु, अस्यैव प्रमाणसिद्धत्वात् तथाव्यवहारोपपत्तेश्चान्यथा व्यवहारोच्छेदप्रसङ्गात् तथाहि वस्तु यदैकान्तेनानभिलाप्यमेव तदा तथाविधशब्दात्तथाविधार्थप्रतीत्यनुदयप्रसङ्गः
15 स्यात्, दृश्यते चानलाद्यानयेत्युक्ते तत्प्रतीतिस्तत्पूर्विका वह्न्यादौ प्रवृत्तिस्तत्समासादनं समासादिते च तथा निवेदनमिति कथञ्चिदभिलाप्यत्वसिद्धिः. अपि चानभिलाप्यैकान्ते स्ववचनविरोधापत्तिरनभिलाप्यैकान्तशब्देनानभिलाप्यैकान्तस्याभिधानात्। अनभिलाप्यैकान्तस्याप्यनभिलाप्यत्वे कुतः परस्य प्रतिपादनं स्यात्, परमार्थतो न कश्चिद्वचनात्प्रतिपाद्यते चेत्स्वयं कथमवाच्यताप्रतिपत्तिः, वस्तुनि वाच्यतानुपलब्धेरिति चेत्सा यदि दृश्यानुप-
20 लब्धिस्तदा सिद्धा क्वचिद्वाच्यता, क्वचित्सिद्धसत्ताकस्यैव कुम्भादेर्दृश्यानुपलब्धिवशादभावप्रतीतेः। अथादृश्यानुपलब्धिः न तर्हि वस्तुनि वाच्यत्वाभावनिश्चयः, स्याद्वादाश्रयणे तु न कश्चिद्दोषः कथञ्चिद्वाच्यत्वावाच्यत्वयोर्वस्तुनि प्रतीतेः, न खल्वेकान्तेनाभिलाप्यस्वभावं वस्तु भवत्युपलम्भभाजनम्, अभिलाप्ययोग्यपर्यायैरेव स्थूलैः कालान्तरस्थायिभिर्व्यञ्जनपर्यायापराभिधानैश्चेतनाचेतनस्य सकलवस्तुनोऽभिलाप्यत्वप्रतीतेः, न पुनरनभिलापयोग्यपर्यायै-
25 रपि। नाप्येकान्तेनानभिलाप्यस्वरूपमुपलब्धिभाजनमनभिलापयोग्यपर्यायैरेव सूक्ष्मैः प्रतिक्षणभाविभिरर्थपर्यायापरनामधेयैस्सर्वस्यानभिलाप्यत्वप्रतीतेर्न त्वभिलापयोग्यपर्यायैरपि। ननु यदि वस्त्वभिलाप्यानभिलाप्यधर्मकं तर्हि अभिलाप्यानां शब्देनाभिधीयमानत्वात्किमित्यकृतसंकेतस्य पुरोऽवस्थितेऽपि वाच्ये शब्दान्न सम्प्रत्ययप्रवृत्ती भवतः, मैवम् तज्ज्ञानावरणकर्मक्षयोपशमाभावात्, तस्य सङ्केताभिव्यङ्ग्यत्वात्, ज्ञस्वभावस्यात्मनो हि मिथ्यात्वा-

दिजनितज्ञानावरणादिकर्ममलपटलाच्छादितस्वरूपस्य संकेततपश्चरणदानप्रतिपक्षभावनादिभिस्तदावरणकर्मक्षयोपशमक्षयावापद्येते, ततो विवक्षितार्थाकारसंवेदनं प्रवर्त्तेत इति, अन्यथा तत्प्रवृत्त्यभावात्, न चात्र विरोधबाधा, भिन्ननिमित्तत्वात्, ययोर्भिन्ननिमित्तत्वं न तयोरेकत्र वस्तुनि विरोधो यथा ह्रस्वत्वदीर्घत्वयोः, भिन्ननिमित्तत्वञ्चानयोरभिलाप्यधर्मकलापनिमित्तापेक्षया तस्याभिलाप्यत्वात् अनभिलाप्यधर्मकलापनिमित्तापेक्षया चानभिलाप्यत्वात्। 5
धर्मधर्मिणोश्च कथञ्चिद्भेदात्। ततश्च तथत एवानभिलाप्यमत एवाभिलाप्यम्, अभिलाप्यधर्मकलापनिमित्तापेक्षयैवाभिलाप्यत्वात् अभिलाप्यधर्माणाञ्चानभिलाप्यधर्माविनाभूतत्वात् यत एव चाभिलाप्यमत एव चानभिलाप्यम्, अनभिलाप्यधर्मकलापनिमित्तापेक्षयैवानभिलाप्यत्वात्, अनभिलाप्यधर्माणाञ्चाभिलाप्यधर्माविनाभूतत्वादिति। ततस्सिद्धमभिलाप्यानभिलाप्यस्वभावं वस्त्वित्यधिकमन्यग्रन्थेभ्योऽवसेयम्॥ 10

सम्प्रति सामान्यविशेषाद्यात्मकत्वं वस्तुनोऽभिधातुं प्रथमं सामान्यस्वरूपं निदर्शयति—

**तत्र सामान्यं द्विविधं तिर्यक्सामान्यमूर्ध्वतासामान्यञ्चेति। व्यक्तिषु सदृशी परिणतिस्तिर्यक्सामान्यं, यथा शुक्लकृष्णादिगोव्यक्तिषु गौर्गौरिति प्रतीतिसाक्षिको गोत्वादिधर्मः। प्रमाणञ्चात्र गौर्गौरिति प्रत्ययो विशिष्टनिमित्तनिबन्धनो विशिष्टबुद्धित्वादिति॥** 15

तत्रेति। सामान्यविशेषाद्यनेकान्तात्मकमित्यत्रेत्यर्थः। प्रकारभेदं दर्शयति—तिर्यगिति। तिर्यगुल्लेखिनाऽनुवृत्ताकारप्रत्ययेन गृह्यमाणं तिर्यक्सामान्यमित्यर्थः। ऊर्ध्वतेति, ऊर्ध्वमुल्लेखिनाऽनुगताकारप्रत्ययेन परिच्छिद्यमानमूर्ध्वतासामान्यमित्यर्थः। तत्र प्रथमभेदं लक्षयति व्यक्तिष्विति, प्रत्येकं व्यक्तिष्वित्यर्थः, दृष्टान्तमाह यथेति। ननु शुक्लकृष्णादिगोभिन्नस्यापरस्य तिर्यक्सामान्यस्य गोत्वाद्यात्मकस्याप्रतीतितस्तल्लक्षणप्रणयनमसमीचीनं विजातीयव्यावृत्तेरेवानुगताकारप्रतीतेर्भावादित्यत्राह प्रमाणञ्चात्रेति, अत्र तिर्यक्सामान्य इत्यर्थः। गौर्गौरिति प्रत्ययोऽत्र धर्मी, विशिष्टनिमित्तनिबन्धनत्वं साध्यधर्मः विशिष्टबुद्धित्वं हेतुः। तथा च तादृशं विशिष्टं निमित्तमितरासम्भवात्सदृशपरिणाम एवेति तिर्यक्सामान्यसिद्धिः। एवञ्चाबाधितप्रत्ययविषयत्वेन सामान्यसिद्धिः, तथाविधस्याप्यस्यासत्त्वे विशेषस्याप्यसत्त्वप्रसङ्गः, अबाधितप्रत्ययत्वव्यतिरेकेण प्रमाणान्तरस्य तद्व्यवस्थापकस्याभावात् अबाधितप्रत्ययस्य विषयमन्तरेणापि सद्भावाभ्युपगमे ततो न कस्यापि व्यवस्था स्यात्, न चानुगताकारत्वं बुद्धेर्बाधितं, सर्वत्र देशकालादावनुगतप्रतिभासस्यास्खलद्रूपस्य तथाभूतव्यवहारहेतोरुपलम्भात्। अतो व्यावृत्ताकारानुभवेनानधिगतमनुवृत्ताकारमवभासयन्ती बुद्धिरियमबाधितरूपानुभूय- 20 25

मानानुगताकारं वस्तुभूतं सामान्यं व्यवस्थापयति। न च विजातीयव्यावृत्त्यालम्बनत्वमस्याः, विधिप्राधान्येन प्रवृत्त्यनुपपत्तेः, सकलव्यक्तिष्वेकव्यावृत्तेस्तुच्छाया असम्भवात्, धर्मिरूपत्वे च न ततो भिन्ना काचिद्व्यावृत्तिरिति कथमनुगता धीस्स्यात् सामान्यमन्तरेणैवानुगत प्रत्ययोत्पत्तौ व्यावृत्तप्रत्ययस्यापि विशेषमन्तरेणोत्पत्तिप्रसङ्गात् ॥

5 किं पुनरूर्ध्वतासामान्यमित्यत्राह—

**पूर्वोत्तरपरिणामानुगामि द्रव्यमूर्ध्वतासामान्यम्, यथा कटककङ्कणादिपरिणामेषु काञ्चनमिति प्रतीतिसाक्षिकं काञ्चनद्रव्यम् ॥**

**पूर्वोत्तरेति** । पूर्वोत्तरयोः कटककङ्कणादिपरिणामयोरनुगामिसाधारणमेकं द्रव्यं कालत्रयानुयायी यो वस्त्वंशस्तदूर्ध्वतासामान्यमित्यर्थः । दृष्टान्तमाह यथेति, तत्र प्रमाणं दर्शयितुं 10 प्रतीतिसाक्षिकमित्युक्तम्, तथा च यथा गौर्गौरित्यनुवृत्तप्रत्ययेन समानकालीनास्वपि व्यक्तिषु तिर्यक्सामान्यं गोत्वाख्यं सिद्ध्यति तथैव पूर्वोत्तरपर्यायेष्वपि काञ्चनमिदं काञ्चनमिदमित्यादिप्रतीत्या तादृशपर्यायासाधारणं द्रव्यरूपमूर्ध्वतासामान्यं कथञ्चिदभिन्नं सिद्ध्यत्येवेति भावः । ननु पूर्वोत्तरपरिणामसाधारणस्य तद्व्यतिरिक्तस्य द्रव्यस्याप्रतीतेर्लक्षणमिदमसङ्गतमिति चेन्न, अर्थानामन्वयरूपस्य प्रत्यक्षादेव प्रतीतेः, यथैव च पूर्वोत्तरपर्याययोर्व्यावृत्तप्रत्ययादन्योऽन्यभेदः 15 प्रतीतस्तथाऽनुवृत्तप्रत्ययात्स्थितिरपि प्रतीयत एव, अनुवृत्त्यविनाभावित्वाद्व्यावृत्तेः, अत एव न घटादीनां भेद एवावभासते नाभेद इत्यभिधातुं शक्यम्, अभेदवियुक्तस्य भेदस्य स्वप्नेऽप्यसंवेदनात् । न च द्रव्यग्रहणे तदभिन्नत्वादतीतानागतावस्थानामध्यवसायापत्तिरिति वाच्यम्, अभिन्नत्वस्य ग्रहणं प्रत्यनङ्गत्वात् । यत्रैवात्मनोऽज्ञानपर्यायप्रतिबन्धकापायस्तत्रैवाध्यवसायकत्वनियमात् । आत्मा हि प्रत्यक्षसहायोऽनन्तरातीतानागतपर्याययोरेकत्वं 20 स्मरणप्रत्यभिज्ञानसहायश्च व्यवहितपर्याययोरेकत्वञ्चावबुध्यत इति न काप्यनुपपत्तिरिति ॥

अधुना विशेषं विभजते—

**विशेषोऽपि द्विविधो गुणः पर्यायश्चेति । सहभावी गुणः, यथाऽऽत्मन उपयोगादयः, पुद्गलस्य ग्रहणगुणः, धर्मास्तिकायादीनाञ्च गतिहेतुत्वादयः॥**

**विशेष इति** । यथा सामान्यं द्विविधं तथा विशेषोऽपीत्यर्थः कथं द्वैविध्यमित्यत्राह 25 गुण इति, यद्यपि पर्यायशब्दो विशेषमात्रवाचकस्तथापि सहवर्त्तिविशेषवाचिगुणशब्दसन्निधानेन क्रमवर्त्तिविशेषवाचक एवेति बोध्यम् । तत्र गुणं लक्षयति सहेति, अभिन्नका-

त्वर्त्तिविशेषो गुण इति भावः, दृष्टान्तमाह यथेति उपयुज्यते वस्तुपरिच्छेदं प्रति व्यापार्यते जीवोऽनेनेत्युपयोगः, सचेतनेऽचेतने वा वस्तुनि जीवो यदोपयुञ्जानस्सपर्यायं सामान्यतया वा वस्तु परिच्छिनत्ति तदा तादृशपरिणाम उपयोग उच्यते, स च परस्परसव्यपेक्षसामान्यविशेषग्रहणप्रवृत्तदर्शनज्ञानस्वरूपद्वयात्मको यदा तदा प्रमाणमन्यथाऽप्रमाणं निरपेक्षनिरस्तेतराकारत्वात् । सर्वजीववर्त्तित्वादस्य सहभावित्वेन गुणत्वं बोध्यम् । 5 आदिना सुखपरिस्पन्दयौवनादयश्च गृह्यन्ते, अजीवस्य तान्वक्तुमाह पुद्गलस्येति, ग्रहणगुण इति, ग्रहणरूपो गुणः, औदारिकशरीरादितया ग्रहणरूपो वर्णादित्वाद्ग्राह्यतारूपः परस्परसम्बन्धरूपो वा धर्मः ग्रहणगुण उच्यते । गतिहेतुत्वादय इति, जीवपुद्गलयोर्देशान्तरगतिपरिणतयोरुपकारकत्वं धर्मास्तिकायस्य गुण इत्यर्थः, आदिना स्थितिहेतुत्वावकाशदातृत्वादयोऽधर्माकाशादीनां गुणा ग्राह्याः । एते हि यदैव द्रव्यमुत्पद्यते तदैव समवेतास्तेन द्रव्येण 10 गुणा उत्पद्यन्ते पौर्वापर्यभाव एव नास्ति, गुणगुणिनोः समानसामग्रीकत्वात् सव्येतरविषाणवत्, अनादिनिधनानां द्रव्यगुणानामुत्पत्तिदर्शनं व्यवहारतः कृष्णादिघटवत् । अत्रेदं बोध्यं जीवस्यास्तित्ववस्तुत्वद्रव्यत्वप्रमेयत्वागुरुलघुत्वस्वाश्रयक्षेत्रावधित्वचेतनत्वामूर्त्तत्वानि अष्टौ गुणाः, अजीवे चेतनत्वामूर्त्तत्वहीना अचेतनत्वमूर्त्तत्वयुताः पुद्गलस्याष्टौ, इतरेषां मूर्त्तत्वहीना अमूर्त्तत्वयुतास्त एवाष्टौ गुणाः, ज्ञानदर्शनसुखवीर्याणि जीवस्य, स्पर्शगन्धरस- 15 वर्णाः पुद्गलस्य, गतिस्थित्यवगाहनावर्त्तनाहेतुत्वानि धर्मादीनां क्रमेण विशेषगुणाः, अविकृतद्रव्येऽविशिष्टतया स्थितत्वात् विकृतस्वरूपास्तु पर्याये गच्छन्ति । चेतनत्वाचेतनत्वमूर्त्तत्वामूर्त्तत्वानि चत्वारि सामान्यगुणा विशेषगुणाश्च, स्वजात्यपेक्षयाऽनुगतव्यवहारकारित्वात्, परजात्यपेक्षया चेतनत्वादीनां स्वाश्रयव्यावृत्तिकरत्वात् । अत एवैते परापरसामान्यवत् सामान्यविशेषगुणा इति षोडश विशेषगुणा विज्ञेया इति ॥ 20

अथ पर्यायं निरूपयति—

**क्रमभावी पर्यायः, यथा सुखदुःखहर्षविषादादयः । अभिन्नकालवर्त्तिनो गुणाः, विभिन्नकालवर्त्तिनस्तु पर्यायाः ॥**

**क्रमभावीति** । क्रमवर्त्तिनः परिणामा नवपुराणादयः पर्याया इति भावः । सामान्येन

१. उपचारवर्जिताः स्वीयस्वभावा एव गुणाः, गुणा हि सहभाविनोऽतोऽनुपचरिताः, यश्चोपचरितः स पर्यायः, अत एव द्रव्याश्रिता गुणाः, उभयाश्रिताः पर्यायाः, तदुक्तं 'गुणाणमासओ दव्वं एगदव्वस्सिया गुणा लक्खणं पज्जवाणं तु उभओ अस्सिया भवे' इति ॥

पर्यायो द्विविधो व्यञ्जनपर्यायोऽर्थपर्यायश्चेति, त्रिकालस्पर्शिनः व्यञ्जनपर्यायाः यथा घटादीनां मृदादिपर्यायः, घटस्य कालत्रयेऽपि मृदादिपर्यायत्वव्यञ्जनात् । सूक्ष्मवर्त्तमानकालवर्त्ती अर्थपर्यायः, यथा घटादेस्तत्तत्क्षणवर्त्ती पर्यायः, यस्मिन् काले वर्त्तमानतया स्थितस्तत्कालापेक्षया कृतविद्यमानत्वेनार्थपर्याय उच्यते । प्रत्येकं द्विभेदो द्रव्यतो गुणतश्च तत्रापि पुनः प्रत्येकं
5 द्विविधश्शुद्धाशुद्धभेदात्, तत्र शुद्धद्रव्यव्यञ्जनपर्यायो यथा चेतनद्रव्यस्य सिद्धत्वपर्यायः । अशुद्धद्रव्यव्यञ्जनपर्यायो नरदेवनारकतिर्यग्रूपः, शुद्धगुणव्यञ्जनपर्यायः केवलज्ञानादिरूपः अशुद्धगुणव्यञ्जनपर्यायो मतिश्रुतावधिमनःपर्यवरूपः । ऋजुसूत्रमतेन क्षणपरिणतोऽर्थपर्यायः शुद्धः, यो यस्मादल्पकालवर्त्ती स तस्मादल्पत्वविवक्षयाऽशुद्धार्थपर्यायः, यथा नरत्वं व्यञ्जनपर्यायस्तथा बालत्वादिकमर्थपर्याय इति । शुद्धगुणव्यञ्जनपर्यायस्य केवलस्यापि प्रतिक्षणं
10 भेदात् तत्पर्यायश्शुद्धगुणस्यार्थपर्यायः । शुद्धद्रव्यव्यञ्जनपरमाणुश्शुद्धपुद्गलपर्यायस्तस्याविनाशित्वात्, संयोगजनिता द्व्यणुकादिका अशुद्धद्रव्यव्यञ्जनपर्यायाः । परमाणुगुणश्शुद्धगुणव्यञ्जनपर्यायः, द्विदेशादिका गुणा अशुद्धगुणव्यञ्जनपर्यायाः । एवं धर्मादिष्वपि भाव्यम् । ननु य एव गुणाः क्रमेण सह वा भवन्ति त एव च पर्याया इति कथं तेषां भेद उक्त इत्यत्राहाभिन्नेति, सदैव सहवर्त्तित्वाद्वर्णगन्धरसादयस्सामान्येन गुणा उच्यन्ते नहि मूर्त्ते वस्तुनि वर्णादिकं
15 कदाचिदपि व्यवच्छिद्यते, वर्णविशेषाणां कृष्णनीलादीनामपि प्रायः प्रभूतकालं सहवृत्तित्वाद्गुणत्वमेवं जीवधर्मादीनां भाव्यम् । विभिन्नेति । एकगुणकालकत्वादयो विभिन्नाः पर्याया द्रव्यस्यावस्थान्तरप्राप्तिरूपाः पर्याया इत्यर्थः । त्रैलोक्यगतस्य सर्वस्यापि कालस्यासत्कल्पनया यो गुणोंऽशस्सर्वजघन्यः तेन कालकः परमाण्वादिरेकगुणकालक उच्यते, एवं द्व्यादिगुणकालकादयो भाव्याः । वस्तुतस्तु नास्ति गुणस्य पर्यायस्य च कश्चन भेदः, द्रव्यपर्यायनयद्वयाति-
20 रिक्तनयस्य भगवद्भिरनुपदेशात् । पर्यायभिन्ने गुणविशेषे ग्राह्ये सति हि तद्ग्राहकगुणास्तिकनयोऽपि स्यादेव, अन्यथा नयानामव्यापकता स्यान्न चायमादिष्टो भगवद्भिः ततोऽसौ न भिन्नः, गुणानाञ्च पर्यायत्वे गुणपर्यायवद्द्रव्यमित्यादिवचनं युगपदयुगपद्भाविपर्यायविशेषप्रतिपादकमेव, अत एव य एव पर्यायस्स एव गुण इत्याद्यागमोऽपि सङ्गच्छते, एतेन गुणविकारः पर्याय इति व्युदस्तम्, गुणस्यैव पर्यायोपादानकारणत्वे द्रव्यप्रयोजनस्य गुणेनैव सिद्धत्वाद्गुणप-
25 र्याययोरेव पदार्थत्वप्रसङ्गेन द्रव्यस्यानर्थकत्वापत्तेः, न च द्रव्यपर्यायगुणपर्यायरूपकार्यभेदेन द्रव्यगुणरूपकारणभेदान्न द्रव्यं निष्फलमिति वाच्यम्, अन्योऽन्याश्रयात्, कारणभेदे सति

---

१. न चैवमपि मतुब्योगाद्द्रव्यभिन्नगुणपर्यायसिद्धिरिति वाच्यम्, नित्ययोगे मतुब्विधानात् द्रव्यपर्याययोस्तादात्म्यात् सदा निर्विभागवर्त्तित्वात् अन्यथा प्रमाणबाधापत्तेः । संज्ञासंख्यास्वलक्षणार्थक्रियाभेदाद्वा कथञ्चित्तयोरभेदेऽपि भेदसिद्धेर्न मतुबनुपपत्तिरिति ॥

कार्यभेदः कार्यभेदे च कारणभेदस्सिद्ध्यतीति । तदेवं द्रव्यपर्यायात्मानौ सामान्यविशेषावेकं वस्तु, प्रतिभासभेदेऽप्यव्यतिरिक्तत्वात् यत्प्रतिभासभेदेऽप्यव्यतिरिक्तं तदेकं यथा मेचकज्ञानम् तथा च द्रव्यपर्यायौ न व्यतिरिच्येते तस्मादेकं वस्त्विति, न चायमसिद्धो हेतुः केवलद्रव्यस्य केवलपर्यायस्य वस्तुत्वे हि स्यादसिद्धिः, तदेव नास्ति क्रमयौगपद्यविरोधेनार्थक्रियाऽसम्भवात्, न च क्रमयौगपद्यविरोधस्तत्रासिद्ध इति साम्प्रतम्, द्रव्यस्य पर्यायस्य वा 5 सर्वथैकस्वभावस्य क्रमयौगपद्यादर्शनात् अनेकपर्यायात्मन एव द्रव्यस्य तदुपलम्भात् । न च द्रव्यपर्याययोर्वास्तवत्वेऽप्यभेदोऽसिद्धः घटादिद्रव्याद्रूपादिपर्यायाणां ज्ञानप्रतिभासभेदात्, घटपटादिवदिति वाच्यम्, तस्यैकत्वाविरोधित्वात्, उपयोगविशेषाद्धि रूपादिज्ञानप्रतिभासभेदो न स्वविषयैकत्वं निराकरोति, सामग्रीभेदेऽयुगपदेकार्थोपनिबद्धविशदेतरज्ञानवत् । नापि विशेषणविरुद्धो हेतुः, विशेषणस्य प्रतिभासभेदस्याव्यतिरिक्तत्वहेतुना विरोधासिद्धेः । 10 नन्वव्यतिरिक्तत्वमैक्यमेव, तथा च साध्याविशिष्टो हेतुरिति चेन्न कथञ्चिदप्यशक्यविवेचनत्वस्याव्यतिरिक्तत्वस्य हेतुत्वेन प्रयोगात् । न चाशक्यविवेचनत्वमप्यसिद्धमिति वाच्यम्, विवक्षितद्रव्यपर्यायाणां द्रव्यान्तरं नेतुमशक्यत्वस्य सुप्रतीतत्वात्, वेद्यवेदकाकारज्ञानवत् तदाकारयोर्ज्ञानान्तरं नेतुमशक्यत्वस्यैव तस्याभिमतत्वात् । न च द्रव्यपर्याययोरयुतसिद्धत्वादशक्यविवेचनत्वमिति वाच्यं यतः किमिदमयुतसिद्धत्वं, न तावद्देशाभेदः पवना- 15 तपयोस्तत्प्रसङ्गात् नापि कालाभेदस्तत एव । स्वभावाभेद इत्यपि न, सर्वथा तथात्वे विरोधात् कथञ्चिच्चेत्तदेवाशक्यविवेचनत्वम्[1] । स एवाविष्वग्भावः समवाय इति परमतप्रसिद्धः, अन्यथा तस्याघटनात् । न च धर्मिग्राहकप्रमाणेन बाधनाद्बाध इति वाच्यम्, तेन धर्मिणोः कथञ्चिद्भिन्नयोरेव ग्रहणात् । सर्वथा भिन्नयोर्द्रव्यपर्यायत्वासम्भवात् । न च द्रव्यपर्याययोर्भिन्नयोः कथमभेदो विरोधादिति वाच्यम्, तथोपलम्भात् मेचकज्ञानवत् नहि तत्र विरो- 20 धवैयधिकरण्यसंशयव्यतिकरसङ्करानवस्थाऽप्रतिपत्त्यभावाः प्रसज्यन्ते, तेषां तथाप्रतीत्या दूरोत्सारितत्वोक्तत्वात् । तस्मात्सिद्धं द्रव्यपर्याययोः कथञ्चिदैक्यमिति[2] ॥

---

१ पृथगाश्रयानाश्रयित्वं पृथग्गतिमत्त्वरूपमप्ययुतसिद्धत्वं नाशक्यविवेचनत्वादन्यदित्यपि बोध्यम् ॥
२. एवं द्रव्यपर्याययोरेकत्वे भेदः कथं सिद्ध्यतीति चेत्परस्परविविक्तस्वभावपरिणामसंज्ञासंख्याप्रयोजनादिभ्य इत्यवेहि, द्रव्यं हि अनाद्यनन्तैकस्वभाववैस्रसिकपरिणामं, पर्यायश्च साद्यन्तानेकस्वभावपरिणामः, द्रव्यस्य द्रव्यमिति पर्यायस्य पर्याय इत्यन्वर्थसंज्ञाभेदः, एकं द्रव्यमित्येकत्वसंख्या द्रव्ये, पर्याया बहव इति पर्याये बहुत्वसंख्येति संख्याभेदः, द्रव्यस्यैकत्वान्वयज्ञानादिकं पर्यायस्यानेकत्वव्यावृत्तिज्ञानादिकं प्रयोजनमिति प्रयोजनभेदः, द्रव्यं त्रिकालगोचरं पर्यायो वर्त्तमानकाल इति काल भेदः इति । एवञ्च द्रव्यपर्यायात्मकं वस्तु स्यान्नानैव स्वलक्षणभेदात्, स्यादेकमेवाशक्यविवेचनत्वात् स्यादुभयमेव क्रमार्पितद्वयात्, स्यादवक्तव्यमेव, सहार्पितद्वयाद्वक्तुमशक्यत्वात्, स्यान्नानाऽवक्तव्यमेव, विरुद्धधर्माध्याससहार्पितद्वयात् । स्यादेकमवक्तव्यमेव,

ननु सुखज्ञानादीनां गुणत्वं सुखदुःखादीनां पर्यायत्वमिति कथं ? पर्यायगुणयोरभेदादित्यत्राह—

**अत्र य एव सुखादयो गुणास्त एव पर्याया इति कथं भेद इति नो वाच्यम्, कालभेदेन भेदस्यानुभवात् ॥**

5 **अत्रेति** । कालभेदस्यानुभूयमानत्वेन तदपेक्षयैव भेदो न सर्वथेति भावः ॥

तदेवं प्रमाणस्य परिच्छेदे समासत आदर्शिते किमीदृशस्य प्रमाणस्य फलमिति जिज्ञासायामाह—

**प्रमाणजन्यं फलं द्विविधमनन्तरं परम्परमिति । अज्ञाननिवृत्तिरनन्तरफलम्, केवलिनामपि प्रतिक्षणमशेषार्थविषयाज्ञाननिवृत्तिरूपपरि-**
10 **णतिरस्त्येव, अन्यथा द्वितीयादिसमये तदनभ्युपगमेऽज्ञत्वप्रसङ्गः ॥**

**प्रमाणजन्यमिति** । अनन्तरमिति, अन्तररहितमव्यवहितं फलमित्यर्थः । परम्परमिति, व्यवहितं फलमित्यर्थः, अनन्तरं फलं प्रमाणानां दर्शयति अज्ञाननिवृत्तिरिति, प्रमाणप्रवृत्तिपूर्वकालीनं प्रमातृविवक्षितविषयकं यदज्ञानं तस्य निवृत्तिरव्यवहितं फलं अज्ञानमुद्दलयतामेव प्रमाणानां प्रवृत्तिरज्ञानस्य सर्वानर्थमूलतया प्रमात्रपकारित्वात्तन्निवर्त्तनस्य
15 प्रयोजनता युक्तैव, एतच्चाव्यवहितं फलं सर्वज्ञानानामेकरूपत्वात् सामान्येनोक्तमिति भावः, एतदुपलक्षकमर्थप्रकाशस्य, तस्याप्यव्यवहितफलत्वात् प्रमातॄणां सर्वेषामर्थार्थित्वादर्थप्रकाशस्य फलत्वौचित्यात् । ननु प्रमाणस्याप्यर्थसंवेदनरूपत्वेन तस्यैव प्रमाणस्य फलत्वेनोक्तिः पर्यवसिता, किमतः ? प्रमाणफलयोरभेदः स्यात्, ततोऽपि किं ? असतः कारणत्वस्य सतश्च फलत्वस्य प्रसङ्गः स्यादिति चेन्मैवम्, जन्मन्येवास्य दोषत्वाद् व्यवस्थायामदोषात्,
20 कर्मोन्मुखज्ञानव्यापारस्य फलत्वात् कर्तृव्यापारोल्लिखितबोधस्य प्रमाणत्वात् कर्तृस्थायां प्रमाणरूपायां क्रियायां सत्यामर्थप्रकाशसिद्धेः । एकज्ञानगतत्वेन प्रमाणफलयोरभेदो व्यवस्थाप्यव्यवस्थापकभावाच्च भेद इति भेदाभेदरूपः प्रमाणफलभावोऽबाधितं स्याद्वादमनुगच्छति, करणस्य क्रियायाश्च कथञ्चिदेकत्वात्प्रदीपतमोविगमवत्, नानात्वं च परश्वधादिवत् । न च यथा देवदत्तः काष्ठं परशुना च्छिनत्तीति करणस्य परशोर्देवदत्तनिष्ठत्वेन छिदायाः काष्ठ-
25 स्थत्वेन च नानात्वं यथैव च प्रदीपस्तमो नाशयत्युद्योतेनेत्यत्रापि करणस्योद्योतस्य तमोनाशात्मकक्रियायाश्च नानात्वं प्रतीयते तथैव करणस्य प्रमाणस्य क्रियायाश्च फलज्ञानरूपाया

---

अशक्यविवेचनसहार्पितद्वयात् स्यादुभयावक्तव्यमेव, क्रमाक्रमार्पितद्वयादिति सप्तभङ्गी भाव्येति भावः ॥

मानात्वेनैव भवितव्यमभेदे दृष्टान्ताभावादिति वाच्यम्, प्रदीपस्स्वात्मनाऽऽत्मानं प्रकाशयतीति प्रतीतेः प्रदीपात्मनः कर्त्तुरनन्यस्य कथञ्चित्करणस्य प्रकाशनक्रियायाश्च प्रदीपात्मिकायाः कथञ्चिदभेदसिद्धेः, तद्वत्प्रमाणफलयोरपि कथञ्चिदभेदसिद्धिरुदाहरणसद्भावात्, तथा सर्वथा तादात्म्येन प्रमाणफलयोर्व्यवस्था च भवितुमर्हतीति भावः। ननु केवलिनां सदा सर्वप्रमेयस्य प्रत्यक्षत्वादज्ञाननिवृत्तिः कथं फलमित्यत्राह केवलिनामपीति, ननु 5 प्रथमसमय एव केवलस्याशेषार्थसंवेदनरूपेण परिणतौ प्रदीपप्रकाशयोरिवाज्ञानध्वंससम्भवेऽपि द्वितीयादिक्षणे कथमज्ञाननिवृत्तिपरिणतिरित्यत्राहान्यथेति, तदनभ्युपगमेऽज्ञाननिवृत्तिपरिणामानभ्युपगमे, अज्ञत्वप्रसङ्ग इति, अज्ञाननिवृत्तेरभावादिति भावः, तथा च प्रथमसमयेऽज्ञाननिवृत्तिः प्रथमसमयविशिष्टतयाऽऽसीत् द्वितीयादिसमये तु द्वितीयादिसमयविशिष्टतया भवतीति न फलाभावलक्षणो दोष इति भावः ॥ 10

अथ किं तस्य व्यवहितं फलमित्यत्राह—

**केवलज्ञानस्य परम्परफलं माध्यस्थ्यं हानोपादानेच्छाया अभावात्, तीर्थकरत्वनामोदयात्तु हितोपदेशप्रवृत्तिः, सुखन्तु न केवलज्ञानस्य फलं, अशेषकर्मक्षयस्य फलत्वात् ॥**

**केवलज्ञानस्येति**। माध्यस्थ्यमिति, मध्यस्थवृत्तितेत्यर्थः, उपेक्षेति भावः। हेतुमाह 15 हानेति, संसारतत्कारणस्य हेयस्य हानात् मोक्षतत्कारणस्योपादेयस्योपात्तत्वाच्च सिद्धप्रयोजनत्वादिति भावः। ननु करुणावतः परदुःखजिहासोः कथमुपेक्षा, तदभावे च कथमाप्त इति चेन्न निष्पन्नयोगस्य मैत्र्यादिवर्जितसद्बोधमात्रचित्तस्य मोहविलासरूपकरुणाया असम्भवात्, अन्यदुःखनिराचिकीर्षायां स्वदुःखनिवर्त्तनवदकरुणयापि वृत्तेः, ननु यः स्वस्मिन् दुःखनिवर्त्तकस्स स्वात्मनि करुणावान् यथाऽस्मदादिः तथा च योगी स्वदुःखनि- 20 वर्त्तक इति प्रयोगेण दयालोरेवात्मदुःखनिवर्त्तकत्वं इति चेन्न स्वभावतोऽपि स्वपरदुःखनिवर्त्तकत्वोपपत्तेः प्रदीपवत्। नहि प्रदीपः कृपालुतयाऽऽत्मानं परं वा तमसो दुःखहेतोर्निवर्त्तयति किन्तु स्वभावादेव, ततो निश्शेषान्तरायक्षयादभयदानं प्रक्षीणावरणस्यात्मनः स्वरूपमेव परमा दया, सैव च मोहाभावाद्रागद्वेषयोरप्रणिधानान्माध्यस्थ्यमिति भावः। नन्वेवं कथं तस्य हितोपदेशे प्रवृत्तिरिष्टसाधनताज्ञानस्य तद्धेतुत्वाद्योगिन इष्टाभावादित्यत्राह तीर्थ- 25 करत्वेति, हितोपदेशप्रवृत्तिरिति, तया परदुःखनिराकरणसिद्धिरिति भावः। ननु केवलज्ञानस्य सुखमपि फलमन्यथा 'केवलस्य सुखोपेक्षे' इति पूर्वाचार्यवचनविरोधो दुष्परिहर इति चेत्सत्यं, किन्तु न सहृदयक्षोदक्षमोऽयं केवलज्ञानस्य सुखफलत्वपक्ष इत्युपेक्षितः।

सुखस्य हि संसारिणि सद्वेद्यकर्मोदयफलत्वं मुक्ते तु समस्तकर्मक्षयफलत्वं प्रमाणोपपन्नं न पुनर्ज्ञानफलत्वं, तस्मात्पारंपर्येण केवलज्ञानस्य फलमौदासीन्यमित्यभिप्रायेणाह सुखन्त्विति, तर्हि कस्य फलं सुखमित्यत्राहाशेषेति ॥

मतिश्रुतादीनाञ्चतुर्णान्तु व्यवहितं तदाह—

5 **तद्भिन्नप्रमाणानान्तु हानोपादानोपेक्षाबुद्धयः फलम् ॥**

**तद्भिन्नेति** । केवलज्ञानभिन्नेत्यर्थः । व्यवधानेन जिहासाजनिका उपादित्साजनिका बहिःप्रवृत्तिनिवृत्तिविषयान्तरसञ्चारशून्यनिभृतज्ञानरूपा वा बुद्धयः फलमित्यर्थः । जिहासाजनकोपादित्साजनकबुद्धिद्वारेण च हेयहानोपादेयोपादानात्मिका विरतिरपि फलम् । स्मृत्यजनकज्ञानरूपोपेक्षायास्तु न कथमपि मत्यादिप्रमाणफलत्वं, अवग्रहादिधारणापर्यन्तत्वा-
10 न्मत्युपयोगस्येति केचित् ॥

प्रमाणानां फलं प्रमाणाद्भिन्नमेवेति केचित्, परे चाभिन्नमेवेति, तत्र तत्त्वजिज्ञासायां श्रोतुस्समुदितायां तदपनोदनायाह—

**फलञ्च प्रमाणाद्भिन्नाभिन्नं, प्रमाणतया परिणतस्यैवाऽऽत्मनः फलत्वेन परिणमनात्तयोः कथञ्चिदभेदः, कार्यकारणभावेन प्रतीयमानत्वाच्च कथ-**
15 **ञ्चिद्भेदः ॥ इति समाप्तं प्रमाणनिरूपणम् ॥**

**फलञ्चेति** । प्रमाणफलञ्चेत्यर्थः चोऽनुक्तसमुच्चयार्थः । अनेन धर्मिनिर्देशः कृतः, प्रमाणाद्भिन्नाभिन्नमिति, साध्यधर्मनिर्देशः, प्रमाणफलत्वान्यथानुपपत्तेरिति हेतुः पूरणीयः । एकान्ततस्तयोर्भेदे प्रमाणफले इमे स्वकीये इमे च परकीये इति नैयत्यं न स्यात्, तस्मादेकप्रमातृतादात्म्येन तयोः कथञ्चिदभेदो वाच्य इत्याशयेनाह प्रमाणतयेति, यो ह्यात्मा प्रमाणा-
20 कारेण परिणमते स एव फलरूपतया परिणमते नान्यः, तथादर्शनात्, अन्यथा प्रमाणफलनियमो न भवेदेवेति भावः । अस्तु तर्हि तयोरभेद एवेत्यत्राह कार्यकारणभावेनेति, कुठारच्छेदनयोरिव प्रमाणफलयोर्हेतुहेतुमद्भावेन प्रतीयमानत्वात्कथञ्चिद्भेदोऽपि स्यादर्थप्रकाशनादौ हि प्रमाणं साधकतमं कारणमर्थप्रकाशस्तत्साध्यं फलमिति प्रतीयते, सर्वथाऽभेदे हि नेयं व्यवस्था भवेदिति भावः । चशब्देनानुक्तस्यात्मनः प्रमातुस्संग्रहः । तेन प्रमाणफलयोर्यत्
25 परिणामिकारणं स प्रमाता, यदि प्रमाता न भवेन्न भवेदेव तदा प्रमाणफलयोर्भेदाभेदः, प्रमाणाभिन्नात्माभिन्नत्वाद्धि प्रमाणफलयोरभेदो वाच्यो गत्यन्तराभावात्, तथा चात्मनोऽभावे

सर्वथा क्षणिकत्वे सर्वथा नित्यत्वे च तदभेदासम्भवेन प्रमाणफलव्यवस्थाविच्छेदापत्त्या प्रमाणफलाभ्यां भिन्नाभिन्न उत्पादव्ययध्रौव्यात्मकः प्रमाताऽभ्युपेय इति दर्शितः । तदेवं प्रमाणविषयफलप्रमातॄणां निरूपितत्वादवसितं प्रमाणनिरूपणमित्याहेतीति ॥

इतितपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वर-चरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य 5 तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायां प्रमाणनिरूपणं नाम सप्तमः किरणः ।

## अथाष्टमः किरणः ॥

ननु यथार्थज्ञानस्य प्रमाणत्वमनुक्त्वा यथार्थनिर्णयस्य तत्त्वं कुतः प्रोक्तमित्यत्राह—

**प्रमाणञ्च निश्चयात्मकमेव, आरोपविरोधित्वात् ॥** 10

प्रमाणञ्चेति । निश्चयात्मकमेवेति, एवकारेण निराकारदर्शनस्य प्रमाणत्वव्यवच्छेदः कृतः, आरोपो हि संशयादिरूपो न वस्तुतथाभावग्राहकः, वस्तुतथाभावग्राहकञ्च निश्चयात्मकमेव ज्ञानं भवितुमर्हति, एवञ्च निश्चयात्मकत्वं व्यापकं व्याप्यञ्च वस्तुतथाभावग्राहकत्वं, वस्तुतथाभावग्राहकं ज्ञानं प्रमाणमुच्यतेऽतस्तेन निश्चयात्मकेन भवितव्यम्, दर्शनञ्च न वस्तुतथाभावग्राहकं निराकारत्वादतो न तत्प्रमाणं निश्चयात्मक- 15 ञ्चेति भावः । निश्चयात्मकत्वे हेतुमाह आरोपेति, वक्ष्यमाणस्वरूपस्यारोपस्य विरोधित्वादित्यर्थः, आरोपो ह्ययथावस्थितवस्तुग्राहकः प्रमाणञ्च यथावस्थितवस्तुग्राहकमतस्तद्विरोधित्वं प्रमाणस्य, तथा च प्रमाणं निश्चयात्मकमेव, आरोपविरोधित्वात् यत्पुनर्न निश्चयात्मकं न तदारोपविरोधि, यथा घटः, आरोपविरोधि च प्रमाणमतस्तन्निश्चयात्मकमेव । न च पक्षैकदेशे प्रथमाक्षसन्निपातसमुद्भूतसंवेदनस्वरूपे निर्विकल्पकप्रत्यक्षे 20 बाधस्तस्य कल्पनाशून्यत्वेन निश्चयात्मकत्वासम्भवादिति वाच्यम्, सर्वैरेव सर्वदा सर्वत्र

१. नामजातियोजनाशून्यत्वेनेत्यर्थः । अत्र बौद्धाः स्वलक्षणरूपविषयसामर्थ्यबलेनोत्पन्नत्वान्निर्विकल्पदर्शने प्रतिभासमाने स्वलक्षणरूपोऽर्थः प्रतिभासते न नामादयः, न ह्यर्थे शब्दाः सन्ति तदात्मानो वाऽर्थाः, येन तस्मिन् प्रतिभासमाने तेऽपि प्रतिभासेरन्निति वदन्ति तन्न, स्वलक्षणस्य ज्ञानविषयत्वासम्भवात् ज्ञानजनकत्वेन ज्ञानभास्यत्वे मानाभावात्, अन्यथा इन्द्रियनिष्ठज्ञानजननशक्तेरपि प्रतिभासप्रसङ्गात् न च नीलाद्यध्यवसायहेतुत्वेन दर्शनस्य नीलादिविषयत्वमिति वाच्यम्, नीलाध्यवसायहेतुत्वेन दर्शनस्य नीलविषयत्वं, तत्त्वेन च नीलाध्यवसायहेतुत्वमित्यन्योऽन्याश्रयात् । तस्याभिलापशून्यत्वेनाध्यवसायहेतुत्वासम्भवाच्च नास्ति तादृशं निर्विकल्पकमित्याशयेनाह सर्वैरेवेति ॥

नीलमहं संवेद्मीत्युल्लेखशेखरस्य निश्चयात्मकस्यैव प्रत्यक्षतोऽनुभूयमानत्वात्, न च शब्दरहितनीलादिपदार्थसामर्थ्येनोत्पत्त्या तद्रूपप्रतिभासित्वमेव तस्योचितं नत्वभिलापप्रतिभासित्वमपीति वाच्यम्, असत्यभिलापप्रतिभासित्वे निश्चयस्वभावत्वासम्भवात्, निःशब्दकार्थजनितत्वमात्रेण शब्दं विना कृत्यस्याभिधानासम्भवाच्च, न च नीलादिपदार्थे
5 सत्युपयोगेऽपि यदीन्द्रियजं ज्ञानमर्थं न परिच्छिन्द्यात् किन्तु स्मृतिसामर्थ्यजन्यतदर्थप्रतिपादकशब्दसंघटनं यावत्प्रतीक्षेत तदार्थग्रहणाय दत्ताञ्जलिस्स्यात्, नीलादिकं ह्यर्थमनीक्षमाणो न तत्र गृहीतसङ्केतं शब्दं स्मरत्युपयोगाभावात्, अननुस्मरन्न तं पुरोवर्त्तिनि पदार्थे घटयति स्मरणमन्तरेण संघटनासम्भवात् असंघटयंश्च त्वद्दृष्ट्या न निरीक्ष्यत एवार्थमिति सुषुप्तप्रायं जगद्भवेदिति वाच्यम्, भवत्पक्षेऽप्यस्य दोषस्य तुल्यत्वात्, उत्पन्नेऽपि हि निर्वि-
10 कल्पके प्रत्यक्षे विधिनिषेधद्वारा विकल्पद्वयं यावन्न भवेत् तावदिदं नीलं नेदं पीतमितीदन्तयाऽनिदन्तया नियतार्थव्यवस्था न स्यात् ' यत्रैव जनयेदेनां तत्रैवास्य प्रमाणते 'ति त्वद्वचनात्। तद्व्यवस्थापकञ्च विकल्पयुगलमेव तच्च शब्दयोजनासहितमिति त्वदुक्तरीत्या जगत्सुषुप्तप्रायं स्यादिति । प्रत्यक्षस्य सविकल्पकत्वे शब्दसंपृक्तमेव स्यात्तथा च शब्दाद्वैतमतप्रवेशइति न च वाच्यम्, स्वत एव तस्य व्यवसायात्मकत्वात् न पुनः शब्दसंपर्कापेक्षया, तद-
15 पेक्षायां वर्णपदव्यवसायासम्भवात् तद्व्यवसाये परस्य शब्दस्यावश्यकतायामनवस्थापत्तेरिति ॥

कोऽयमारोपो यद्विरोधित्वं प्रमाणस्य स्यादित्यत्राह—

**अतत्प्रकारके वस्तुनि तत्प्रकारकत्वज्ञानमारोपः, स त्रिधा विपर्ययसंशयानध्यवसायभेदात् । अन्यथास्थितवस्त्वेककोटिमात्रप्रकारकनिश्चयो विपर्ययः, यथा शुक्ताविदं रजतमिति ज्ञानम् ॥**

20 **अतत्प्रकारक इति**। यत्प्रकारकं ज्ञानं क्रियते तत्प्रकाराभाववति वस्तुनीत्यर्थः। तं विभजते स इति । अथ विपर्ययलक्षणमाहान्यथेति. अतदाकारे वस्तुनि तन्मात्राकारप्रकारकनिश्चय इत्यर्थः, अत्र निश्चयत्वं संशयभिन्नज्ञानत्वमेव, अनध्यवसायस्य संशयभिन्नत्वेऽपि एककोटि-

---

१. इदमस्य नामेति गृहीतसंकेतमित्यर्थः, तदस्मरणं च इदमेतत्पदवाच्यमिति तेन नाम्ना तद्वाच्यं न योजयितुमीष्टे इत्याह्यननुस्मरन्निति. न निरीक्ष्यत इति, तदेतदितिशब्देन नाभिलपितुं शक्नोतीत्यर्थः ॥
२. क्षणिकवादिमते नामजात्यादियोजनं विकल्पे कथमपि नोपपद्यते, दीर्घकालिकत्वात्तदुपयोगस्येत्यपिबोध्यम् ॥
३. अन्यथा दृश्यस्य दर्शनेन पूर्वानुभूतनीलादिज्ञाननामविशेषयोः सह स्मरणेन प्रकृते नामयोजनासंभवस्य वक्तव्यतया सह स्मृतिद्वयस्वीकारापत्तिः स्यात् अत एव वर्णपदाना क्रमिकाणां क्रमेणैवाध्यवसायेन युगपदध्यवसानासंभवः, कथञ्चिदध्यवसाये वा नाम्नो नामान्तरेण विना स्मृत्यसंभवेन तदावश्यकतायां भवत्यनवस्थेति भावः ॥

मात्रप्रकारकनिश्चयत्वाभावान्नातिव्याप्तिः विशिष्टविशेषास्पर्शित्वात्तस्य । दृष्टान्तमाह यथेति, अरजताकारायां शुक्तिकायां रजताकारतया रजतमिदमिति ज्ञानं विपर्यासरूपत्वाद्विपर्ययरूपं विपरीतख्यातिरिति भावः ॥ अत्रेदमवधेयम्, मीमांसका भ्रमस्थले विवेकाख्यातिमाहुः, तथाहि नन्विदं रजतमित्यादिभ्रान्तत्वेनाभिमतप्रत्ययजनने को हेतुः न तावदिन्द्रियम्, तस्य पुरोवर्त्तिशुक्त्यादावेव सम्बद्धत्वेनासन्निकृष्टरजतादिज्ञानजनने सामर्थ्याभावात्, सम्बद्धस्य 5 वर्त्तमानस्यैव तद्ग्राह्यत्वात्, न च दोषसहकृतेनासन्निकृष्टेनापि तेन रजतज्ञानजनने प्रभुणा भवितव्यमिति वाच्यम्, स्वाभाविककार्यजननसामर्थ्यविहननेन प्रतिहतशक्तिकस्य दोषस्य विपरीतकार्योत्पत्तौ तत्सहकारित्वासम्भवात् । नहि कलुषितं गोधूमबीजादिकं व्रीह्यङ्कुरादिजननसमर्थं दृश्यते । नेतरत्किञ्चित्कारणमस्ति विनिवृत्तेन्द्रियव्यापारस्यापि तथाविधबोधोत्पत्तिप्रसक्तेस्तस्मादिदं रजतमिति प्रत्यक्षस्मरणरूपं ज्ञानद्वयमेव, इदमंशे प्रत्यक्षहेतोरिन्द्रिय- 10 सन्निकर्षस्य रजतांशे च साधारणरूपादिदर्शनेनोद्बुद्धसंस्कारस्य पूर्वानुभवजन्यस्य स्मरणहेतोस्सत्त्वात् । तत्रेदमिति ज्ञानं पुरोवर्त्तिशुक्तिकाविषयकं, रजतमिति ज्ञानञ्च परोक्ष[1]रजतावगाहि न रजतज्ञानस्य शुक्तिकाशकलं विषयोऽन्याकारस्यातिप्रसङ्गे[2]नान्यविषयकत्वासम्भवात् । न च तत्तानवभासनेन रजतज्ञानं न स्मरणमिति वाच्यम्, तत्तारहितानामपि बहूनां स्मरणस्योपलम्भात्, न च तर्हि कथमिदं रजतमित्येकज्ञानतया भानम्, न तु 15 द्वित्वेन, रजते चातीततताया नावभास इति वाच्यम्, दोषमहिम्नेदमिति ज्ञानस्य शुक्तिकात्वेन शुक्तिकाया विषयीकरणेऽसामर्थ्येन उभयसाधारणधर्मदर्शनाच्च रजतशुक्त्योस्तज्ज्ञानयोश्च भेदाग्रहेण द्वित्वस्यातीततायाश्चाप्रतिभासनात् । न च सर्वेषामेव यथार्थज्ञानत्वे नेदं रजतमित्यादिबाधकप्रत्ययाः कस्य बाधका भवेयुरिति वाच्यम् । तेषामिदमन्यद्रजतमन्यदिति विवेकस्य प्रकाशकत्वेनैव बाधकज्ञानत्वात्, न तु रजतज्ञानस्यासत्यत्वप्रकाश- 20 कत्वेन । स्वप्नज्ञानस्यैकत्वे[3]ऽपि तस्य स्मृतित्वेनाग्रह एव विवेकाग्रहः । न च सदृशदर्शनमन्तरेण तस्य कथं स्मृतित्वमिति वाच्यम्, निद्रोपद्रुतस्य मनस एव तत्र निमित्तत्वात् । एवं चन्द्रद्वयज्ञाने द्विधाकृतया नयनवृत्त्या चन्द्रैकत्वाग्रहणं दोषा[4]त् तिक्ता शर्करेत्यादौ च पित्त-

---

१. परोक्षेति पदेन रजते इन्द्रियसन्निकर्षाभावस्सूचितः, रजतस्यातिविप्रकृष्टत्वात् लिङ्गाद्यनुपलम्भेन चानुमानादिविषयत्वासम्भवाद्रजतज्ञानं स्मृतिरूपमेवावसेयम् ॥ २. तत्तज्ज्ञाने सकलविषयप्रतिभासप्रसङ्गेन सर्वज्ञानानां समस्तविषयकत्वं, सर्वेषाञ्च सर्वज्ञत्वं स्यादित्यतिप्रसङ्गः तथाऽन्याकारज्ञानस्यान्यविषयकत्वे स्वविषयव्यभिचारित्वेन सर्वज्ञानेषु विश्वासासम्भवात् कुत्रापि कस्यापि प्रवृत्तिर्निवृत्तिर्न स्यादित्यप्यतिप्रसङ्ग इति भावः ॥ ३. एकत्वेऽपि स्मृतिरूपत्वेऽपि, न स्वप्नं प्रत्यक्षं, इन्द्रियव्यापाराभावात् ॥ ४. तिमिरादिदोषादित्यर्थः ॥

द्रव्यगततिक्तग्रहशर्कराग्रहयोर्भेदाग्रहाद्विवेकाख्यातिः । सर्वत्रैवं सम्यगग्रहणस्यैव तदर्थत्वम्, न तु शुक्तौ रजतप्रतीतिः, ज्ञानान्तरेऽपि मिथ्यात्वसम्भावनया सर्वत्रानाश्वासेन प्रवृत्त्यादिव्यवहारोच्छेदप्रसङ्गः स्यादिति चेन्मैवम् शुक्ताविदं रजतमिति प्रत्ययस्य स्वाकारसंवरणरजतरूपापत्तिपरिणामविशेषवत्याश्शुक्तेरेवालम्बनत्वात्, दुष्टेन्द्रियादीनामेव तादृशज्ञानहेतुत्वात्। कार्यप्रतीतौ हि न कारणाभावशङ्का युक्तिमती, प्रतीयते चात्रैकज्ञानात्मकमिदं रजतमिति कार्यं, तदनुरोधेन च कारणस्य कल्पना उचिता दावानलदग्धवेत्रबीजात्कदलीप्रकाण्डोत्पत्तिदर्शनाच्च दुष्टकारणस्य स्वकार्यानुत्पादकत्वे सति विपरीतकार्यस्याप्युत्पादकत्वात् । न च दावानलो वेत्राङ्कुरे दोषरूपोऽपि कदल्यङ्कुरं प्रत्यनुकूल इति वाच्यम्, अत्रापि दोषस्य सम्यग्ज्ञाने दोषरूपत्वेऽपि मिथ्याज्ञानं प्रत्यनुकूलत्वस्य न्याय्यत्वात्, इदं रजतमिति ज्ञानं न विशिष्टज्ञानं किन्तु ग्रहणस्मरणरूपं ज्ञानद्वयमित्यपि न सम्यक्, रजतार्थिप्रवृत्तिसामान्ये रजतत्वप्रकारकज्ञानस्य संवादिप्रवृत्तिस्थले समानविशेष्यताप्रत्यासत्त्या हेतुत्वेन विसंवादिप्रवृत्तिहेतोरपि मिथ्याज्ञानस्यैकत्वसिद्धेः[1] । संवादिप्रवृत्तौ विशिष्टज्ञानं विसंवादिप्रवृत्तौ चोपस्थितेष्टभेदाग्रह इति कल्पने बीजाभावाद्गौरवाच्च । न चेन्द्रियसंस्काररूपकारणभेदात्कार्यभेद इति युक्तम्, रूपालोकलोचनादिभिरनेकैः कारणैरुत्पद्यमानस्य घटादिसंवेदनस्याप्यनेकत्वप्रसक्तेः, न च विभिन्नज्ञानसामग्रीभेदात्कार्यभेद इति वाच्यम्, इदं रजतमित्यादौ सामग्रीभेदासिद्धेः, चक्षुरादिकारणसमुदायस्यैवात्र कारणत्वात्, न चास्य प्रत्यक्षस्मरणरूपज्ञानद्वयरूपत्वात्सामग्रीभेदोऽनुमेय इति वाच्यम्, अन्योन्याश्रयात् ज्ञानभेदे सिद्धे कारणभेदः, तत्सिद्धौ च ज्ञानभेद इति । किञ्च भेदाग्रह इत्यत्र कोऽयं भेदः, वस्तुस्वरूपमात्रं वा परस्पराभावो वा व्यावर्त्तकधर्मयोगो वा, नाद्यो विद्यमानपदार्थग्राहिपूर्वानुभूतपदार्थग्राहिप्रत्यक्षस्मरणाभ्यां भेदस्य गृहीतत्वात् वस्त्वभिन्नत्वाद्भेदस्य । वैपरीत्येन गृहीतमिति चेद्विपरीतख्यातिप्रसङ्गः । युष्माभिरभावानभ्युपगमादेव न द्वितीयः पक्षो युक्तः, अभ्युपगमे तु स्मृतरजतस्य कथमत्र नाभावज्ञानम्, न च नियतदेशतयाऽवगतस्य दोषमहिम्नाऽनियतदेशत्वेनात्रावगमान्नाभावज्ञानमिति वाच्यम्, नियतदेशस्यानियतदेशत्वेन भानाभ्युपगमाद्विपरीतख्यातिप्रसङ्गात् । न च देशविनिर्मुक्तस्यैव स्मरणान्नान्यथाख्यातिरिति वाच्यम्, पूर्वावगतरजतस्मरणे सति केवलाधिकरणग्रहस्यैव तव मते तदभावोपलम्भरूपत्वात्, न चास्ति शुक्तौ

---

१. विशेष्यतासम्बन्धेन रजतप्रवृत्तित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन रजतत्वप्रकारकज्ञानं कारणम् अत्र कार्यं कारणञ्च रजतेऽस्तीति समानविशेष्यताप्रत्यासत्त्या कार्यकारणभावः, कारणतावच्छेदकाक्रान्तं रजतत्वविशिष्टरजतप्रमाज्ञानं रजतत्वप्रकारकयत्किञ्चिद्विशेष्यकज्ञानञ्च भवति, तस्मादेकेनैव कार्यकारणभावेनोभयत्र निर्वाह इति भ्रमात्मकैकज्ञानस्वीकारे लाघवमिति भावः ॥

रजताभावः परन्तु दोषमहिम्ना नावगत इति युक्तम् दोषस्य शुक्तिनिष्ठभेदग्रहप्रतिबन्धकत्वकल्पनापेक्षया रजततादात्म्यग्रहहेतुत्वकल्पनाया एव न्याय्यत्वात् । नापि तृतीयः, स्मर्यमाणे रजते व्यावर्त्तकधर्मस्य रजतत्वस्यैव भानात् तस्य व्यावर्त्तकत्वं पुरोवर्त्तिन्यविद्यमानत्वात् तस्य च तत्र भाने विपरीतख्यातिप्रसक्तेः । अथ गृह्यमाणात्स्मर्यमाणस्य व्यावर्त्तकधर्मेऽवगतेऽपि स्मर्यमाणाद्गृह्यमाणस्य स नावगतः, शुक्तिकायां प्रतिभासमानैश्शुक्लत्वादिभिर्न हि सा व्यावर्त्तयितुं शक्यते, तेषां रजतेऽपि सत्त्वादिति चेन्न, देशकालावस्थाशून्यतया स्मर्यमाणाद्रजतात् पुरोवर्त्तिनोऽनुभूयमानस्य व्यावर्त्तकानां देशकालावस्थाविशेषाणां प्रतीयमानत्वात् । नापि बाधकप्रत्ययो विवेकं प्रकाशयतीदमन्यद्रजतमन्यदिति, बाधकप्रत्ययेन प्रसक्तरजतत्वाभावस्यैवावगाहनात् न हि सोऽप्रसक्ताविविक्तत्वाप्रतिषेधेन विविक्तत्वमवगमयति, अन्यथा चामीकरादीनामपि प्रतिषेधं कुर्यात्। रजतादिविषयकस्वप्ने स्मरणत्वेनाग्रहे रूपान्तरत्वेन च ग्रहे विपरीतख्यात्यापत्तिः, सर्वात्मनाऽग्रहणस्य ग्रहणविरुद्धत्वञ्च स्यात् । चन्द्रद्वयवेदनमपि न दोषाच्चन्द्रैकत्वाग्रहरूपम्, चन्द्रैत्वाग्रहेऽपि द्वित्वानुभवानुपपत्तेः, न च नयनसमाश्रितद्वित्वासंसर्गाग्रह एव चन्द्रे द्वित्वग्रह इति साम्प्रतम्, परोक्षस्य तस्योपस्थित्यभावात् । अनवगतेन्द्रियवृत्त्यैव सर्वत्र रूपादीनां बोधात् । एतेन तिक्ता शर्करेत्यादिव्यवहारस्य पित्तद्रव्यगततिक्तत्वशर्कराग्रहभेदाग्रहनिमित्तत्वं प्रत्युक्तम्, अगृह्यमाणतिक्तत्वस्यैव पित्तस्य शरीरगतस्य ज्वरोत्पादकत्ववद्रसनगतस्य विपरीतप्रत्ययोत्पादकत्वात्, सर्वानुभूयमानसामानाधिकरण्यानुपपत्तेश्च । किञ्चेदं रजतमिति यदि ज्ञानद्वयं तदा तयोः सहैवोत्पादः क्रमेण वा नाद्यः सहज्ञानद्वयोत्पत्त्यनभ्युपगमात् न द्वितीयः प्रत्यक्षात्पूर्वं संस्कारस्यानुद्बोधेन स्मरणासम्भवात् प्रत्यक्षादुत्तरं रजतस्मरणे च प्रत्यक्षादनन्तरं विपरीतव्यापारेऽपि चक्षुषि तदापत्तेः, [2]तस्मात्सकललोकसिद्धं रजतात्मना पुरोवर्त्तिभानं दुरपह्नवमिति ॥

केचिदिदं रजतमित्यत्र न कश्चिद्विषयतया भासते, रजतसत्ताभानेऽभ्रान्तत्वप्रसक्तेः, विधिमुखतयाऽस्य प्रवृत्तेर्न रजताभावो विषयः, अतदाकारत्वादेव च नापि शुक्तिकाविषयः,

---

१. अत्रेदमपि बोध्यम् रजतादिविषयकस्वप्नस्य स्मृतित्वेनाग्रहे त्वयापि संवित्तेः स्वप्रकाशत्वेनाभ्युपगतत्वात्केन रूपेण भानं, यदि स्मृतित्वेन तर्हि केन रूपेणाग्रहः । यदि त्वनुभवत्वरूपेण ग्रह उच्यते तदाऽन्यथाख्यातिः, स्मृतेरनुभवरूपत्वाभावात्, अथ ज्ञानत्वेन, तदपि न सम्भवति ज्ञानत्वव्याप्यस्मरणत्वानुभवत्वशून्यस्य ज्ञानत्ववतः कस्याप्यभावादिति ॥ २. पुरोवर्त्तिनं पदार्थं गृहीत्वा पश्चाद्रजतं स्मरामि प्रथमं वा रजतं स्मृत्वा पश्चात् पदार्थममुं गृह्णामीति क्रमेण भवदभिमतज्ञानद्वयप्रादुर्भावस्यानुभवविरुद्धत्वादित्यर्थः ॥

नवा रजताकारतया शुक्तिर्विषयः, अन्यस्यान्याकारेण दुर्ग्रहत्वात्ततोऽयमख्यातिरूप एवेति, तन्न, भ्रान्तेर्निर्विषयकत्वे भ्रान्तिसुषुप्तावस्थयोरभेदप्रसङ्गात्, अर्थभानाभानाभ्यां हि तयोर्विशेषाद्भेदो वाच्यः, स एव त्वया नाभ्युपगम्यत इति, तस्य ज्ञानस्य निर्विषयत्वेऽख्यातिरूपत्वस्याप्यसम्भवाच्च, स्वरूपेण पररूपेण वा कस्यापि ततोऽप्रतिभासे रजतज्ञानमिति
5 व्यपदेशासम्भवाच्चेति ॥ बौद्धास्तु तस्यासत्ख्यातित्वमाचक्षते तथाहि रजतमिदमिति प्रतीयमानं वस्तु ज्ञानं वा स्यादर्थो वा, न प्रथमः, अहं रजतमित्यहंत्वसामानाधिकरण्येनाप्रत्ययात् ज्ञानस्यान्तर्मुखाकारत्वात् । तन्निष्पाद्यार्थक्रियाभावेन द्वितीयोऽपि पक्षो नोचितः वितथज्ञानविषयीकृतस्य वस्तुनो बाधकज्ञानेनार्थताया बाध्यमानत्वाच्च, तस्मादसदेव तत्तत्र प्रतिभातमिति, तदपि न युक्तम्, रजतत्वव्यपदेशासंभवात्, देशान्तरे विद्यमानस्यास्य
10 प्रथनरूपत्वेऽसत्ख्यातित्वस्य विपरीतख्यातित्वप्रसङ्गात्, सर्वथाऽसतोऽर्थस्य प्रथनरूपत्वे च शशविषाणस्यापि प्रतीतिप्रसङ्गात्, असतस्सद्रूपेण प्रथनत्वस्यापि विपरीतख्यातेरनुल्लंघनात् न च रजतं सदेव तत्संसर्गस्त्वलीको भ्रान्तौ सदुपरागेण भासत इति वाच्यम्, विषयतायास्सद्वृत्तित्वव्याप्यत्वात् अन्यथा गवि शशशृङ्गीयत्वविशिष्टसम्बन्धेन शृङ्गभानापत्तेः । रजतमिदमिति भासमाने वस्तुनि ज्ञानत्वार्थत्वद्वयविकल्पोऽपि न युक्तः, आद्यविकल्पानभ्युपगमात्,
15 द्वितीयस्य चेष्टत्वात्, अर्थविशेषप्रयुक्तार्थक्रियाविशेषवैधुर्येऽपि तत्सामान्यनिबन्धनाभिलापप्रवृत्त्यादिरूपार्थक्रियायास्तत्राव्याहतत्वात्, एवं तर्हि कथं नार्थनिश्चयः इति चेन्न, अर्थविशेषप्रयुक्तार्थक्रियाकारिण एवार्थव्यवसायात्मकत्वात् । बाधकप्रत्ययेनापि न तद्विषयस्यार्थत्वमपोद्यते, किन्तु मिथ्याज्ञानस्य मिथ्यात्वमेव प्रकाश्यते, ततो नासत्ख्यातिः प्रमाणमर्हेति ॥

अपरे त्वत्र प्रसिद्धार्थख्यातिमाहुः विपर्ययज्ञाने हि प्रसिद्धस्यैवार्थस्य भानं, न च तद्वि-
20 षयस्याविद्यमानत्वं विचारासहत्वादिति वाच्यम्, प्रतीतिव्यतिरेकेणान्यस्य विचारस्यानुपपत्तेः प्रतीतिबलेनैव हि करस्थमुक्ताफलादेर्व्यवस्था । तां चात्रापि प्रवर्त्तमानां केन हि निरोद्धुं शक्यते । न चोत्तरकाले तत्प्रतिभासाभावेन तद्विषयस्यासत्त्वमिति वाच्यम्, तदानी तद्विषयस्याभानेऽपि पूर्वप्रतिभासकाले तस्य विद्यमानत्वात्, अन्यथोत्तरकाले तोयबुद्बुदादीनामप्रतिभासनेन पूर्वप्रतिभाससमयेऽप्यविद्यमानताप्रसङ्गादिति, मनोरमं न तत्, अन्तरा

---

१. ज्ञानातिरिक्तबाह्यार्थानुपपत्तौ च तदंशे सत्ख्यातिरेव स्यादिति ज्ञानवाद्यभ्युपगतासत्ख्यातिरेव स्यादसत्ख्यातिरिति स्वसिद्धान्तभङ्गोऽपि स्यादित्यपि बोध्यम् ॥ २. इदं रजतमिति बहिर्मुखतयैव प्रतिभासनादिति भावः ॥ ३. यो यस्मिन् देशे सत्तामनुभवति तस्य तत्रैव प्रतिभासनं युक्तं नहि स्तम्भदेशे कुम्भः प्रतिभासत इति भावः ॥

प्रमाणसिद्धिमर्थस्य प्रसिद्धत्वायोगात्, अन्यथा भ्रान्ताभ्रान्तव्यवस्थासमुच्छेदप्रसक्तेः, नहि संवेदनमिदं भ्रान्तमिदमभ्रान्तमिति निर्णयो निमित्तमन्तरेण कर्तुं शक्यते, सर्वेषामेव यथावस्थितवस्तुव्यवसायित्वात्। प्रतिभाससमये वस्तुनो विद्यमानता किं देशान्तरे शुक्तिकादेशे वा, आद्येऽन्यथाख्यातेरेव नामान्तरत्वापत्तिः दोषमहिम्ना तत्र स्थितस्य शुक्तिदेशे भानाभ्युपगमात्। अन्यथा तत्रैव प्रतिभासस्स्यात्। द्वितीये चोत्तरकालेऽपि तस्य प्रतिभासापत्तेः 5
नहि जलबुद्बुदवदस्य क्षणिकत्वं किञ्चित्कालं स्थिरत्वात्। नेदं रजतमिति बाधकज्ञानस्य शुक्तिकादेशे रजतनिषेधकस्य प्रवर्त्तमानत्वादत्र तस्य विद्यमानत्वासिद्धेश्चेति ॥

अन्ये तु शुक्तिकायां रजतं यच्चकास्ति तस्य बाह्यतया प्रतिभानं न संभवति, बाधकप्रत्ययेन तद्बाह्यतायाः प्रतिषेधात् ततो ज्ञानात्मन एवायमाकारोऽनादिवासनामाहात्म्यात् बहिरिव परिस्फुरतीत्यात्मख्यातिरेवेयमित्याहुः, तेऽपि न प्रेक्षावन्तः, नेदमिति बाधकेनान्यत्र वर्त्ते- 10
मानस्य रजतादेश्शुक्तिकादेशस्थत्वस्यैव बाधनेन तद्बाह्यतामात्रस्याबाधनात्। नाप्यात्मा वासनया बहिरिव परिस्फुरतीति युक्तम्, तथाहि सा वस्तुस्वरूपा, अवस्तुस्वरूपा वा, नान्त्यो गगनकुसुमायिततया तस्या रजतव्यवस्थापकत्वासम्भवात् न प्रथमो ज्ञानाद्भिन्नत्वे तस्यास्त्वदभ्युपगतज्ञानाद्वैतक्षतेः ज्ञानाभिन्नत्वे ज्ञानाकारो ज्ञानाकारमाहात्म्याद्बहिरिव प्रतिभासत इत्युक्तं स्यात्, तथा च सति तदेव साध्यं साधनमित्यविशेषप्रसङ्गः, ततो न वासना 15
युक्तिमती। ज्ञानाकारस्यैव रजतस्य संवेदने चाहं रजतमित्यन्तर्मुखतया प्रतीतिः स्यात्। न त्विदं रजतमिति बहिर्मुखतया, ज्ञाननिष्ठोऽपि रजताकारोऽनादिवासनामाहात्म्याच्छुक्तिनिष्ठतया प्रतिभासत इत्यभ्युपगमे चान्यथाख्यात्यङ्गीकारापत्तिः स्यात्, न च भ्रान्तयः स्वाकारमेव रजतादिकं बहीरूपतया प्रकाशयन्तीति वाच्यम्, प्रमाणाभावात्, अनुभवस्य रजतज्ञानाकारासाक्षित्वात्, इदन्तया कलधौतस्यैव भासकत्वात् शुक्तिकायां रजताकारता- 20
प्रतिषेधकत्वेन च बाधकज्ञानस्यापि तत्राप्रमाणत्वात्। न च रजते पुरोवर्त्तिशुक्त्याकारत्वस्य प्रतिषेधेऽर्थतो बोधाकारत्वस्य सिद्धिरिति वाच्यम्, तत्प्रतिषेधेऽर्थतो देशान्तरसत्त्वस्यैव सिद्धेः, दृष्टातिक्रमेणादृष्टज्ञानाकारत्वकल्पने बीजाभावात्, नेदं रजतमपि तु शुक्तिकाशकलमित्युल्लेखेन निषेधानुपपत्तेः, तव मते शुक्तिकायां रजतस्याप्रसक्तत्वात् शुक्तिरियं मया रजतत्वेन ज्ञातेति प्रत्यभिज्ञानुपपत्तेः, आन्तरं कलधौतं बहीरूपतया ज्ञातमिति प्रत्यभिज्ञाया 25
एवापत्तेः। ज्ञानस्य बाह्यार्थाविषयकत्वे रजताकारोल्लेखेनेव नीलाद्याकारोल्लेखेनापि प्रवृत्त्या-

---

१. नहि तत्प्रकारतया प्रतिभासमात्रेण तस्य तत्प्रकारकत्वमेव स्वीकर्तुं युज्यते. भ्रान्त्युच्छेदापत्तेरिति भावः ॥ २. रजतानुभवस्येत्यर्थः, स हि रजतमिदन्त्वेनैव बोधयति, न तु ज्ञानाकारत्वेन, येन प्रमाणं भवेदिति भावः। तत्र बाधकप्रत्ययोऽपि न प्रमाणमित्याह शुक्तिकायामिति ॥

पत्तेर्नियामकाभावात्, वासनाया एव रजतदेशकालादीनामसतामवभासे नियामकत्वे चासत्ख्यात्यापत्तेश्चेति ॥

वेदान्तिनस्तु अनिर्वचनीयख्यातिमाहुस्तथाहि नात्र शुक्तौ भासमानं रजतं सत्, तथात्वे तद्बुद्धेर्वास्तवरजतबुद्धिवदभ्रान्तत्वं स्यात्, असत्त्वे तु तस्य गगनारविन्दवत्प्रतिभासप्रवृत्त्यो-
5 रविषयत्वप्रसङ्गः, सदसद्रूपत्वे तूभयपक्षोपक्षिप्तदोषानुषङ्ग इत्यनिर्वचनीयमेवेदमिति, तदपि न सुन्दरम्, शुक्तौ रजतभ्रमे विषयभूतशुक्तिशकलस्य स्वपररूपाभ्यां सदसद्रूपस्याव्याहत-त्वात्, न च तस्य रजतप्रकारिताकत्वे किं नियामकमिति वाच्यम्, विशेषणज्ञानस्य तादात्विकशुक्तिपरिणामविशेषस्यैव[1] वा नियामकत्वात्, अर्थेनैव धियां विशेषात्, न च कुतो न विलक्षणरजतोत्पाद इति वाच्यं तदुत्पादककारणाभावात् नहि परिणामिकारणादि-
10 सामग्रीं विना कार्योत्पत्तिः क्वचिदपि दृष्टा । न च शुक्तेरज्ञानमेव प्रतीयमानरजतस्य कारणमिति वाच्यं तस्य परिणामिकारणत्वायोगात् तत्तत्पर्यायपरिकरितद्रव्यस्यैव परिणामि-कारणत्वात्, अज्ञानपर्यायाविष्टमात्मद्रव्यमेव तत्परिणामिकारणमस्त्वित्यपि न चारु, चेत-नस्याचेतनं प्रति कथमपि परिणामिकारणत्वानुपपत्तेः । न च सम्यग्ज्ञानप्रागभावमि-थ्याज्ञानान्यतरभिन्नं[2] मायाऽविद्यादिशब्दवाच्यं वस्त्वन्तरमेवाज्ञानमनिर्वचनीयरजतहेतुरिति
15 वाच्यं तादृशे मानाभावात् । नापि शुक्त्यज्ञानं रजतहेतुः, तस्य पाषाणादावपि सत्त्वेन देशनियमाभावात् । न चेदन्त्वावच्छेदेन शुक्त्यज्ञानमिदन्त्वावच्छेदेन रजतहेतुरिति वाच्यम्, दोषाभावकालेऽपि तस्मात्तत्प्रसङ्गात् दोषस्याप्यपेक्षणे चेदमंशावच्छेदेनाज्ञानान्तरस्योदासी-नस्य च हेतुत्वं दुर्निवारमिति यत्किञ्चिदेतत् ॥

ननु तर्हि रजतमिदमिति भ्रान्तेरालम्बनं किम् ? रजतं वा स्याच्छुक्तिकाशकलं वा,
20 नाद्यः, असत्ख्यातेरेव प्रसङ्गात् विषयभूतं हि रजतं तत्रासत् । न चान्यत्र सत एव तत्र भानान्नासत्ख्यातिरिति वाच्यम्, तथा सतीदं रजतमित्युल्लेखेन ज्ञानानुदयप्रसङ्गात् विप्रकृष्टे रजते चाक्षुषज्ञानासम्भवात् अन्यथा सर्वत्र चाक्षुषज्ञानोत्पादप्रसङ्गेन चक्षुषो जगन्मात्रग्राह-कत्वापत्तेः । न द्वितीयः, रजताकारतयोत्पद्यमानत्वासम्भवात् । अन्याकारज्ञानस्यान्यविषय-कत्वासम्भवात् । प्रतीतेश्शुक्तिकाविषयकत्वे भ्रान्तित्वासम्भवाच्च । न च रजतस्य प्रतिभा-
25 सेऽप्यालम्बनमन्यदेवेति वाच्यम् शुक्तिकाया अप्रतिभासमानत्वेनालम्बनत्वायोगात्, न च सन्निहितत्वाद्भवत्यालम्बनमिति वाच्यम्, सन्निहितानामन्येषामप्यालम्बनत्वापत्तेः । तथा च

---

१. संवृतस्वाकारसमुपात्तरजतरूपापत्तिपरिणामविशेषस्येत्यर्थः ॥ २. सम्यग्ज्ञानप्रागभावो वा मिथ्याज्ञानं वा कारणमस्त्वित्यत्राह तत्तत्पर्यायेति ॥

यदेव प्रतीतावबभासते तदेव रजतमालम्बनतया वाच्यं रजतञ्च तत्रासदेवेत्यसत्ख्यातिरेवाऽऽयाता न विपरीतख्यातिरित्याशङ्कायामाह—

**अत्र हि स्मरणोपढौकितं रजतं तद्देशतत्कालयोरविद्यमानमपि दोषमहिम्ना सन्निहितत्वेन भासत इति विपरीतख्यातिरूपमिदम्। स्मरणञ्च चाकचिक्यादिसमानधर्माणां शुक्तौ दर्शनाद्भवति ॥** 5

**अत्रेति** । इदं रजतमिति भ्रान्तावित्यर्थः, रजतं भासत इति योजना, तेन रजतमेवालम्बनमित्युक्तम्, ननु तदानीमसत्ख्यातित्वं स्यादित्यात्राह तद्देशतत्कालयोरविद्यमानमपीति, यदा यस्मिन् तज्ज्ञानं भवति तद्देशतत्कालयोरविद्यमानमपीत्यर्थः, एतद्देशकालावच्छेदेनैव तस्याविद्यमानत्वं न तु देशान्तरे कालान्तरेऽपीति यावत् । तथा च देशान्तरादौ रजतस्य विद्यमानत्वं फलितम्, असत्ख्यातिवादो हि सर्वथाऽसतोऽर्थस्य प्रथने स्यान्न चात्र तथेति 10 नासत्ख्यातिप्रसक्तिरिति भावः । ननु तत्राविद्यमानस्य रजतस्य नयनासन्निकृष्टत्वेन कथं भानं भवेदित्यत्राह दोषमहिम्नेति, तथा चातद्देशकालस्यापि रजतस्य दोषमहिम्ना सन्निहितत्वेन प्रतिभासनं नानुपपन्नमिति भावः । दोषमहिम्ना तथाभासमानत्वादेव प्रतीतेरस्या विपरीतख्यातिरूपतेत्याशयेनाह इति विपरीतख्यातिरूपमिदमिति, अस्मादेव हेतोरिदं ज्ञानं विपरीतख्यातिरूपमित्यर्थः । ननु दोषमहिम्ना यद्यतद्देशकालयोरपि भानं तर्हि जगतोऽपि 15 ग्रहणं स्यादित्यत्राह स्मरणोपढौकितमिति, स्मरणेनोपस्थितं रजतमेव न तु विश्वं, चेतसि परिस्फुरतः पदार्थस्य बहिरवभासनं हि उपस्थानं, चेतसि च न सर्वं परिस्फुरतीति भावः । कथं न विश्वस्य स्मरणमित्यत्राह स्मरणञ्चेति, सादृश्यविशिष्टार्थदर्शनेन हि स्मरणं भवति सादृश्यञ्च चाकचिक्यादिकं शुक्तिकारजतयोरेव न विश्वस्य, अतस्समानधर्मदर्शनेन स्मरणं रजतस्य, तेन च रजतमेवोपस्थापितं न विश्वमिति भावः, एवञ्च संवेदनात्पृथग्भूतस्य 20 पदार्थस्यात्र परिस्फुरणान्नात्मख्यातिरत्यन्तासतः प्रतिभासाभावाच्च नासत्ख्यातिरिति ज्ञेयम् । ननु रजतमिदमित्यादिज्ञानस्य प्रत्यक्षरूपत्वेन स्मरणानपेक्षत्वात्कुतस्तदुपस्थापितार्थावभासित्वमिति चेन्न, अस्य प्रत्यक्षाभासत्वेनैवंविधपर्यनुयोगानास्पदत्वात् ॥

अत्र वृद्धाः, संवृतस्वाकारा समुपात्तकलधौताकारा शुक्तिकैवालम्बनं तज्ज्ञानस्य, त्रिकोणत्वादिस्वविशेषग्रहणाभावात्, चाकचिक्यादिसमानधर्मदर्शनजन्यरूप्यस्मरणारोपितरूप्याकारत्वाच्च। न च रजताकारज्ञानस्य कथं शुक्तिका विषय इति वाच्यम्, अङ्गुल्यादिना निर्दिश्यमानस्य कर्मतया ज्ञानजनकस्यैवालम्बनत्वात्, अन्यथा प्रकृतज्ञानेन साऽनपेक्षणीया भवेत् । अपेक्षणीया च सा, अन्यथा तदसन्निधानेऽपि प्रकृतज्ञानोत्पादापत्तेः, उत्तरकालं 25

तद्विषयकप्रत्यभिज्ञानस्य बाध्यबाधकभावस्य चानुपपत्तेश्च भिन्नविषययोस्तदसम्भवात् । ननु ज्ञानानां कोऽयं बाध्यबाधकभावः, सहानवस्थानं वा वध्यघातकभावो वा विषयापहारो वा फलापहारो वा, नाद्यः, सम्यक्प्रत्ययेनेव मिथ्याप्रत्ययेनापि सम्यक्प्रत्ययस्य बाधापत्तेः सहानवस्थानाविशेषात् । अत एव न द्वितीयः, उभयोर्वध्यघातकभावाविशेषात् । 5 नापि तृतीयो विषयस्य प्रतिपन्नत्वेनापहारासम्भवात् । प्रतिपन्नस्याप्रतिपन्नत्वबोधकतया बाधकज्ञानस्यानुत्पादाच्च । नापि चरमः, उपादानादिज्ञानस्य प्रमाणफलस्योत्पन्नत्वेनापहरणासम्भवात्, नहि यदुत्पन्नं तदनुत्पन्नमित्यभिदधाति बाधकः । किञ्च तुल्यविषययोर्बाध्यबाधकभावो भिन्नविषययोर्वा स्यात् । नाद्यः धारावाहिज्ञानानां बाध्यबाधकभावप्रसङ्गात् । नान्त्यः, घटपटज्ञानयोरपि बाध्यबाधकभावापत्तेरिति चेदुच्यते प्रतिपन्नविषयस्यासत्त्वप्रति- 10 पादकत्वेन विषयापहारकस्यैव बाधकत्वमिति । तत्रापीदानीमुपनतस्यैवासत्त्वं न ख्याप्यते किन्तु तदैव तस्यासत्त्वम्, न च प्रथमज्ञानेन तदानीं तस्य सत्त्वस्य गृहीतत्वेन तदैव तत्र बाधकेनासत्त्वस्य ख्यापने स्वरूपेणैव तस्य सदसत्त्वापत्तिर्विरुद्धा प्रसज्यत इति वाच्यम्, पूर्वप्रतिपन्नाकारोपमर्दद्वारेण बाधकप्रत्ययोत्पत्तेः, यन्मया तदा रजतमिति प्रतिपन्नं तद्रजतं न भवत्यन्यदेव तद्वस्त्विति, न च ज्ञानानां स्वस्वकालनियतत्वेनोत्तरज्ञानं पूर्वज्ञानोत्पाद- 15 कालावच्छिन्नतद्विषयाभावप्रतिपत्तौ कथं समर्थमिति वाच्यम्, स्वसामग्रीतस्तथैवोत्तरस्य बाधकप्रत्ययस्योत्पद्यमानस्य प्रतीतेरित्यलमधिकेन ॥

नन्विदं रजतमिति ज्ञानमित्यत्रेतिशब्दः प्रकारार्थोऽभिमतः । तथा चैवं प्रकारं ज्ञानं विपर्यय इति तद्भावार्थः, प्रकारता च प्रत्यक्षादिरूपेण, तत्र पूर्वोदितमुदाहरणन्तु प्रत्यक्षविषयमनुमानादिविषयको विपर्ययः कीदृक्ष इत्यनुयोगे त्वाह—

20 **एवं बाष्पधूलीपटलादौ धूमभ्रमाद्वह्निविरहिते देशे वह्न्यनुमानमयं देशो वह्निमानिति । क्षणिकाक्षणिके वस्तुनि बौद्धागमात्सर्वथा क्षणिकत्वज्ञानं, भिन्नाभिन्नयोर्द्रव्यपर्याययोर्नैयायिकवैशेषिकशास्त्रात एकान्तभेदज्ञानं, नित्यानित्यात्मके शब्दे मीमांसकशास्त्रात एकान्तनित्यत्वज्ञानमित्यादीनि विपरीतोदाहरणानि ॥**

25 **एवमिति ।** न केवलं प्रत्यक्षविषय एव विपर्ययोऽनुमानादिविषयोऽपि स इत्येवंशब्दतात्पर्यार्थः । अनुमानविषयविपर्ययमाह बाष्पधूलीपटलादाविति, आदिना नीहाराविभ-

१. यन्मया पूर्वं रजतत्वेन ज्ञातं तदेवेदं शुक्तिकाशकलमिति प्रत्यभिज्ञानं, नेदं रजतमपितु शुक्तिकेति ज्ञानस्य भिन्नविषयकत्वेन बाधकत्वमपि न स्यादिति भावः ॥

हणम् । अधूम इति शेषः, धूमभ्रमादिति, कुतोऽपि कारणात् भ्रान्त्या धूमत्वेन ज्ञाते सतीति भावः । वह्निविरहिते देश इति, अन्यथास्थितवस्तूपदर्शकं पदमिदम् । वह्न्यनुमानमिति, एककोटिमात्रप्रकारकनिश्चयत्वप्रदर्शनपरम् । तदुल्लेखप्रकारमाहायं देश इति । इतीति, लौकिकविपर्ययाणामुपदर्शकमिदम् । अथ परीक्षकविपर्ययमाह—क्षणिकेति, क्षणिकाक्षणिकत्वं भिन्नाभिन्नत्वं नित्यानित्यत्वञ्च वस्तुनः परीक्षया निर्णीतं तथाभूतं वस्तु तत्तच्छास्त्रबलेन 5 भ्रान्तिसहकृतेनैकान्तक्षणिकत्वादिज्ञाने सति विपर्ययत्वमिति भावार्थः, स्पष्टं सर्वम् ॥

अथ संशयस्वरूपमाह—

**अनिश्चितनानांशविषयकं ज्ञानं संशयः । यथा स्थाणुर्वा पुरुषो वेति ज्ञानम् । इदञ्च स्थाणुत्वपुरुषत्वान्यतरनिश्चायकप्रतिषेधकप्रमाणाभावादारोहपरिणाहात्मकसाधारणधर्मदर्शनात्कोटिद्वयविषयकस्मरणाच्च समुन्मिषति । अयं प्रत्यक्षधर्मिकः संशयः । परोक्षधर्मिविषयको यथा कश्चिद्वनप्रदेशे शृङ्गमात्रदर्शनेन किं गौरयं गवयो वेति संशयः ॥** 10

अनिश्चितनानांशविषयकमिति । यतो विधौ प्रतिषेधे वा कस्यचिदसमर्थं अत एव तज्ज्ञानं अनिश्चितनानांशविषयकमित्यर्थः, ज्ञानमिति, बोधविशेष इत्यर्थः, संशय इति, यत्सर्वप्रकारैश्शेत इवातस्संशय इत्यर्थः । एकस्मिन् धर्मिणीत्यादिः, तथा चैकस्मिन् 15 धर्मिणि अनिश्चितनानांशविषयकं ज्ञानं संशय इति भावः । अनिश्चितेति विशेषणात् स्वपररूपेण सदसदात्मकं वस्त्विति ज्ञानानां व्युदासः । दृष्टान्तमाह यथेति, अयमिति शेषः, सामान्यतस्संशयं प्रति धर्मिज्ञानं साधारणधर्मदर्शनं विशेषादर्शनमनेकविशेषस्मरणञ्च कारणमिति लक्ष्ये तत्सङ्गमयति इदञ्चेति, संशयात्मकमिदं ज्ञानञ्चेत्यर्थः । स्थाणुत्वेति, स्थाणुत्वपुरुषत्वयोर्विशेषयोरन्यतरस्य निश्चयजनकं प्रतिषेधकं वा यत्प्रमाणं तदभावादित्यर्थः । एतेन 20 विशेषादर्शनरूपकारणसम्पत्तिर्दर्शिता, आरोहपरिणाहात्मकेति, स्थाणुपुरुषयोरारोहपरिणाहात्मकसाधारणधर्मस्य दर्शनादित्यर्थः, अनेन साधारणधर्मदर्शनरूपकारणसम्पत्तिर्दर्शिता, कोटिद्वयविषयकस्मरणाच्चेति, स्थाणुत्वपुरुषत्वरूपकोटिद्वयविषयकस्मरणादित्यर्थः, अनेनानेकविशेषस्मरणं दर्शितम्, दूरात्प्रत्यक्षगोचरः पुरोवर्ती धर्मी संशयस्यातो धर्मिज्ञानं कारणमायातम्, ततश्चायं स्थाणुर्वा पुरुषो वेति संशयः समुन्मिषति । साधकबाधकप्रमाणा- 25 भावाद्धि पुरोवर्तिनि यदा स्थाणुरयमिति निर्णेतुमभिलषति तदा पुरुषविशेषानुस्मरणबलेन पुरुषे समाकृष्यते, यदा च पुरुषोऽयमिति निश्चेतुमिच्छति तदा स्थाणुविशेषानुस्मरण-

महिम्ना स्थाणावाकृष्यत इत्यनेकार्थे समाकृष्यमाणस्य प्रतिपत्तुरनवस्थितरूपतया दोलायमानः स्थाणुर्वायं पुरुषो वेति प्रत्ययः प्रादुर्भवतीति भावः । ननु कोटयोर्विरोधज्ञानमपि संशयकारणमस्ति तत्कुतो नोक्तमिति चेत्सत्यं, संशये[1] तदधिकरणावृत्तित्वरूपविरोधस्य प्रकारत्वे तस्य तदभावव्याप्तिपर्यवसायित्वेन तदभावव्याप्यवत्तानिश्चयरूपसंशयप्रतिबन्धकसत्त्वात्तदभावस्य च कार्यसहभावेन हेतुत्वात्संशयमात्रस्य दुर्लभत्वापत्तेः, किन्तु संशये तद्विरोधस्संसर्गतया भासते तस्य च पूर्वमुपस्थितिर्नापेक्षितेति[2] विरोधज्ञानं न संशयहेतुत्वेनोक्तम् । एवं गृहे स्थितस्य वाप्यामापस्सन्तीति ज्ञानं साधकबाधकप्रमाणाभावापेक्षया संशयात्मकं, तस्यानेकांशानुल्लेखित्वेऽपि न सन्तीत्यंशोऽन्तर्निगीर्णः स्फुरत्येवेति बोध्यम् । ननु किमयं संशयः प्रत्यक्ष एव भवति परोक्षेऽपि वेत्यत्राहायमिति, स्थाणुर्वा पुरुषो वेत्याकारकस्संशय इत्यर्थः, प्रत्यक्षधर्मिक इति, सांव्यवहारिकप्रत्यक्षधर्मिक इत्यर्थः । परोक्षधर्मिविषयकमाह परोक्षेति, अत्र गोत्वगवयत्वविषयकसाधकबाधकप्रमाणाभावाद्विशेषदर्शनेन शृङ्गेणानुमिते धर्मिणि परोक्षे संशय इति परोक्षधर्मिविषयक इति भावः ॥

अथ क्रमायातमनध्यवसायं निरूपयति—

**विशिष्टविशेषास्पर्शिज्ञानमनध्यवसायः । यथा गच्छता मार्गे किमपि मया स्पृष्टमिति ज्ञानम् । अयमनध्यवसायः प्रत्यक्षविषयः ॥**

विशिष्टेति । विशिष्टरूपेण—स्पष्टतया विशेषं यन्न स्पृशति तादृशं ज्ञानमित्यर्थः, दूरान्धकारादिवशादसाधारणधर्मावमर्शरहितः[3] प्रत्ययोऽनिश्चयरूपत्वादनध्यवसाय इति भावः । उदाहरति यथेति, अन्यत्रासक्तचित्तत्वात् पथि व्रजता मया किमपि स्पृष्टं परं किं वस्त्विति न ज्ञातमिति यो बोधस्स वस्तुविशेषाध्यवसायाभावात्किमपि स्पृष्टमित्यनिर्णयात्मकमनध्यवसायज्ञानमिति भावः । अत्रापीतिशब्देनेदृशदिशा प्रत्यक्षयोग्यविषया अनध्यवसाया विज्ञेया इति सूचितं, तदेवाहायमिति, ईदृग्जातीय इत्यर्थः ॥

---

१. यथा पर्वतो वह्निमान्नवेत्यत्र वह्निः वह्न्यभावश्च प्रकारः, तत्र तदधिकरणावृत्तित्वरूपो विरोधोऽपि भासेत यदि तदा वह्नौ वह्न्यभावाधिकरणावृत्तित्वस्य भाने तस्य वह्निव्याप्तिरूपत्वेन पर्वते वह्निव्याप्यवत्ताज्ञानेन वह्न्यभाववत्ताज्ञानं, वह्न्यधिकरणावृत्तित्वस्य वह्न्यभावे भाने च तस्य वह्न्यभावाभावाधिकरणावृत्तित्वलक्षणवह्न्यभावव्याप्तिरूपत्वेन पर्वते वह्न्यभावव्याप्यवत्ताज्ञानात् वह्निमत्ताज्ञानं न स्यात् तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकस्य सत्त्वात्, न च संशयोत्पत्तिकाले प्रतिबन्धकसत्त्वेऽपि प्रतिबन्धकाभावरूपकारणस्य कार्याव्यवहितपूर्वक्षणे सत्त्वेन न संशयोत्पत्तौ बाधकः कश्चिदिति वाच्यम्, प्रतिबन्धकाभावस्य कार्यकालवृत्तित्वेन हेतुत्वादित्याशयेनाह संशय इति ॥ २. तत्प्रकारकज्ञान एव तज्ज्ञानस्य हेतुत्वेन विरोधस्य संसर्गतया भाने न तज्ज्ञानापेक्षेति भावः ॥ ३. आदिनाऽन्यासक्तचित्तत्वादीनां ग्रहणम् ॥

परोक्षविषयमनध्यवसायमाह—

**परोक्षविषयस्तु गोजातीयपरिज्ञानविधुरस्य विपिननिकुञ्जे सास्नामात्रदर्शनेन सामान्यतः पिण्डमात्रमनुमाय प्रदेशेऽस्मिन् कोऽयं प्राणीति विशेषानुल्लेखि ज्ञानम् । अनिश्चितानेककोटिविषयकस्संशयः । सर्वथा कोट्यविषयकोऽनध्यवसाय इत्यनयोर्भेदः । तथाऽनवस्थितानेकांशाप्रकारके वस्तुन्यनवस्थितानेकांशप्रकारकत्वावगाहनात्संशय आरोपरूपः । अनध्यवसायस्य संशयविपर्ययात्मकारोपेण सहायथार्थपरिच्छेदकत्वसाम्यादारोपरूपत्वमुपचारवृत्त्या भाव्यम् ॥ इत्यारोपनिरूपणम् ॥**

**परोक्षेति ।** गोजातीयपरिज्ञानविधुरस्येति, गोज्ञानविधुरस्य द्वीपान्तरवासिन इत्यर्थः । विपिननिकुञ्ज इति, देशान्तरमायातस्य कस्मिंश्चिदरण्यलतासमूह इत्यर्थः, सास्नामात्रदर्शनेनेति, प्राण्यविनाभूतसास्नामात्रावलोकनेनेत्यर्थः, पिण्डमात्रमनुमायेति, प्राणिमात्रमनध्यवसायधर्मिणमनुमायेत्यर्थः । मात्रपदेन प्राणिविशेषनिर्णयाभावः प्रकाशितः, अनध्यवसायज्ञानाकारमाह प्रदेशेऽस्मिन्नित्यादिना । विशेषानुल्लेखीति, जातिविशेषाविषयकमित्यर्थः । ननु संशयो यथा विशेषानवधारकस्तथानध्यवसायोऽपीति कथं संशयतोऽस्य भेदो येन त्रैविध्यमारोपस्य स्यादित्यत्राहानिश्चितेति, अस्ति तयोर्लक्षणभेदोऽनवधारितानेककोटिविषयको हि संशयः, अनध्यवसायस्तु सर्वथा विशेषोल्लेखविधुर इति भावः । सर्वथा कोट्यविषयक इति, सर्वथा विशेषकोट्यविषयक इत्यर्थः । तेन प्राणित्वस्योल्लेखेऽपि न क्षतिः । नन्वतत्प्रकारके वस्तुनि तत्प्रकारकत्वज्ञानमारोप इति लक्षणं विपर्ययेऽन्यथास्थितवस्त्वेककोटिप्रकारकनिश्चयरूपे सङ्गतमेव, किन्त्वारोपविलक्षणयोस्संशयानध्यवसाययोः कथमारोपरूपतेत्याशङ्कायामाह तथेति, एवञ्च संशये आरोपविलक्षणत्वमेवासिद्धं, वस्तुनोऽनेककोट्यप्रकारके वस्तुनि स्थाणवादावनेककोटिगोचरत्वादित्याशयेनाहानवस्थितेति, तथा चारोपरूपत्वेऽपि विपर्ययस्यैककोटिविषयकत्वात्संशयस्य च नानाकोटिविषयकत्वाद्भेदेनोल्लेख इति भावः । नन्वेवं तर्हि कोटिविशेषविधुरस्यानध्यवसायस्य कथमारोपता, कथमपि तल्लक्षणाननुवृत्तेरित्यत्राहानध्यवसायस्येति, यथा हि सिंहनिष्ठशौर्यादिगुणसदृशशौर्यादिगुणयोगतो माणवके सिंहत्वं सिंहशब्दश्चोपचर्यते सिंहो माणवक इति, तथैव विपर्ययसंशयात्मकारोपनिष्ठायथार्थपरिच्छेदकत्वरूपगुणसदृशायथार्थपरिच्छेदकत्वगुणयोगेनारोपत्वमारोपशब्दश्चोपचर्यतेऽनध्यवसाय आरोप इतीति भावः । एतेन संशयविपर्यययोरेव वस्तुत्वं नत्वनध्यवसाय-

---

१. संशयस्यानेकांशानवस्थितप्रतिभासरूपत्वात् विपर्ययस्य च विपरीताकाराध्यवसायस्वरूपत्वाद्वस्तुत्वं, अन-

स्येति मतमपास्तम्. तस्याकिञ्चित्करवेदनरूपत्वात् सम्यग्ज्ञानानुत्पादकत्वेनावस्तुत्वे संशय-विपर्यययोरपि तथात्वापत्तेः, न चारोपलक्षणाभावादवस्तुत्वमिति वाच्यम्, मुख्यवृत्त्या तथा-त्वेऽप्युपचारवृत्त्याऽऽरोपरूपत्वादित्याशयेनोपचारवृत्त्या भाव्यमित्युक्तम् । इत्येवं प्रमाणपरि-पन्थ्यारोपनिरूपणमवसितमित्याहेतीति ॥

5 इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वर-चरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायामारोपनिरूपणं नामाष्टमः किरणः ॥

## अथ नवमः किरणः ॥

10 नन्वस्मिन्प्रवचने सर्वं वस्त्वनन्तधर्मात्मकतया सङ्कीर्णस्वभावं, अतस्तत्परिच्छेदकतया प्रमाणमपि तादृशमेव, व्यवहारस्त्वसंकीर्णप्रतिनियतधर्मप्रकारकोऽतस्तादृशव्यवहारसिद्धये समर्थः कश्चिदपेक्षणीय एव, यस्तादृशः स एव नय उच्यत इति तत्प्रबोधनार्थमाह—

**श्रुताख्यप्रमाणबोधितांशग्राहकोऽनिराकृतेतरांशो वक्तुरभिप्रायवि-15 शेषो नयः ॥**

श्रुतेति । श्रुतमार्हतप्रवचनं तद्रूपं यत्प्रमाणं तेन बोधितमनेकान्तात्मकं वस्तु तस्यांश एक-देशो नित्यत्वादिस्तद्ग्राहकः अनिराकृतेतरांशः, अप्रतिषिद्धानित्यत्वाद्येकदेशो यो वक्तुरभिप्राय-विशेषस्स नय इत्यर्थः । नय इति, अनन्तधर्माध्यासितं वस्तु स्वाभिप्रेतैकधर्मविशिष्टं नयति प्रापयति संवेदनमारोहयतीति नयः, प्रमाणप्रवृत्तेरुत्तरकालभावी परामर्श इत्यर्थः तदेवोक्तं 20 श्रुताख्यप्रमाणबोधितांशेति । इतरांशप्रतिक्षेपे तु नयत्वव्याहतेराहानिराकृतेतरांश इति, वक्तुरभिप्रायविशेष इत्यनेन ज्ञानरूपस्य नयस्यापेक्षात्मशाब्दबोधत्वं प्रदर्शितं तथा चान-न्तधर्मात्मकवस्त्वंशभूतप्रतिनियतधर्मप्रकारकापेक्षात्मकशाब्दबोधत्वं ज्ञानरूपस्य नयस्य स्वरू-पम्, नयवाक्यस्य तु तादृशापेक्षात्मकशाब्दबोधजनकवाक्यत्वं स्वरूपं बोध्यम् । अपेक्षा-

---

ध्यवसायस्य तु निस्स्वरूपत्वादवस्तुत्वमिति शङ्काकर्तुराशयः अकिञ्चित्करवेदनत्वं तस्य स्वरूपं सकलस्वभाव-शून्यत्वे तस्याप्रमाणत्वमपि वक्तुं न शक्यते, अप्रमाणत्वरूपस्वरूपस्य तत्र सत्त्वापत्त्या वस्तुत्वापत्तेरित्या-शयेनोत्तरमाह तस्येति ॥

१. दुर्नयस्याप्यधिकृतांशाप्रतिक्षेपकवक्त्रभिप्रायत्वात्तत्रातिव्याप्तिवारणाय श्रुताख्यप्रमाणबोधितांशग्राहकेति । रूपादिग्राहकरसाद्यप्रतिक्षेपकापायादिवारणाय विशेषपदम् ॥

त्वञ्च क्षयोपशमजन्यतावच्छेदकजातिविशेषो विलक्षणविषयिता वा। तत्र मानञ्च तद्धर्मप्रतिपक्षधर्मवत्तया ज्ञातेऽपि तद्धर्मवत्तया जायमानस्यानुभवस्यान्यथानुपपत्तिरेव। ननु लोकैः कुम्भोऽस्तीत्यादिवाक्यश्रवणसमनन्तरं कुम्भविषयकशाब्दज्ञानस्यैव स्वात्मन्यनुभवनात्कुम्भविषयकापेक्षात्मकशाब्दबोधस्याननुभवनादपेक्षात्मकनयज्ञानसत्त्वे मानाभाव इति चेन्न, विरुद्धतया भासमानैरनेकैर्धर्मैर्मिश्रितस्य वस्तुनोऽपेक्षां विना विवक्षितैकधर्मप्रकारकनिश्चयविषयीकरणासम्भवात्। अनपेक्षात्मकस्य तद्विरुद्धधर्मप्रकारकज्ञानस्य तत्रानुपपत्तेः। न चापेक्षां विना लौकिकोऽपि व्यवहारस्सञ्चच्छते, अग्रावच्छेदेन कपिसंयोगाभाववति वृक्षे शाखापेक्षयैव कपिसंयोगवत्त्वव्यवहारात्। ननु धर्माणामप्यनन्तानां धर्म्यभिन्नत्वेन धर्मिग्राहकप्रत्यक्षादेव निखिलधर्मकलितवस्तुनो विवक्षितधर्मप्रकारेणापि निश्चितत्वात्किमपेक्षयेति चेत्सत्यं, यद्यप्येकस्मिन् घटादौ गृह्यमाणे तद्धर्मद्वारा द्रव्यार्थादेशेन भूतभविष्यद्वर्त्तमानानां तद्वृत्तियावद्धर्माणां ग्रहो जायत एव, यथा परेषां सामान्यलक्षणाप्रत्यासत्तेस्स्थानेऽभिषिक्तस्य घटविषयकतिर्यक्सामान्योपयोगस्य घटत्वव्यापकविषयताकप्रत्यक्षत्वं तादृशज्ञानत्वं वा कार्यतावच्छेदकं तथा घटविषयकोर्ध्वतासामान्योपयोगस्यापि तादात्म्यसम्बन्धेन तादृशप्रत्यक्षत्वस्य तादृशज्ञानत्वस्य वा न्यायसिद्धत्वात्, न चैवं सति सर्वस्य सर्वज्ञत्वापत्तिर्दोषः, द्रव्यार्थिकतया तस्या इष्टत्वात् तथापि स्फुटतया प्रतिनियतधर्मप्रकारकबोधस्सापेक्षः, शाब्दस्थले नयापेक्षः, प्रत्यक्षादिस्थलेऽवध्यवच्छेदकादिज्ञानापेक्षः। यथाहि दण्डादिग्रहकाले तत्परिमाणग्रहेऽपि दीर्घत्वप्रकारकमयमस्माद्दीर्घ इति ज्ञानं नियतावध्यपेक्षं तथा सदसदात्मकवस्तुग्रहेऽपि सत्त्वादिप्रकारकं ज्ञानं स्वद्रव्याद्यपेक्षं, अयमस्माद्दीर्घ इतिवत्स्वद्रव्याद्यपेक्षयाऽयं सन् परद्रव्याद्यपेक्षया चासन्नित्येव व्यवहारात्। न च व्यवहार

१. असत्त्वप्रतिपक्षसत्त्ववत्तया ज्ञातेऽपि घटेऽसत्त्ववत्तया अनुभवो जायते स चापेक्षां विना न सम्भवति, निरपेक्षसत्त्वासत्त्वयोरेकत्र परस्परं विरोधात् अनुभूयमानस्य त्वपलापो न सम्भवत्यतिप्रसङ्गादतः अपेक्षावलम्बनेनैव तयोर्व्यवस्था कार्येति सिद्धयत्यपेक्षेति भावः। अनुभवस्यैवासिद्धत्वमाशङ्कते नन्विति॥ २. तथा चानपेक्षात्मकतद्धर्मवत्ताबुद्धिं प्रति, अनपेक्षात्मकतदभाववत्तानिश्चयस्यैव प्रतिबन्धकतयाऽपेक्षाया अभावे तद्धर्मवत्तया ज्ञातेऽनपेक्षात्मकतद्विरुद्धधर्मप्रकारकज्ञानं न स्यादिति भावः॥ ३. येन धर्मेण धर्मी गृहीतस्तद्धर्मद्वारेत्यर्थः। न्यायनये हि घट एकस्मिन् दृष्टे घटत्वरूपसामान्यलक्षणाप्रत्यासत्त्या सकलघटप्रत्यक्षमङ्गीक्रियते सामान्यलक्षणायाश्च कार्यतावच्छेदकं घटत्वव्यापकविषयिताकप्रत्यक्षत्वं, इदमेवास्मन्मते सामान्यलक्षणास्थानाभिषिक्तस्य तिर्यक्सामान्योपयोगस्य घटविषयकस्य कार्यतावच्छेदकं भवति तथैकधर्ममुखेन घटे ज्ञाते सति तदाश्रयाणां तदभिन्नानां यावतां धर्माणां ज्ञानमूर्ध्वतासामान्येन भवति, अत ऊर्ध्वतासामान्योपयोगस्य कार्यतावच्छेदकं तादात्म्यसम्बन्धेन घटव्यापकविषयताकप्रत्यक्षत्वं भवति, घटस्य तादात्म्येन व्यापकीभूता विषयता घटाभिन्नयावद्धर्मेष्विति तादृशविषयताकप्रत्यक्षत्वमिति तदर्थ इति भावः॥

एव सापेक्षो न तु बोध इति वाच्यम्, व्यवहारस्य व्यवहर्त्तव्यज्ञानादधिकानपेक्षत्वेन व्यवहर्त्तव्यज्ञानेऽपेक्षाया अविषयत्वे व्यवहारस्य सापेक्षत्वासम्भवात् । सेयं नयप्रवृत्तिहेतुरपेक्षा वास्तविकी, क्वचिद्वैज्ञानिक्यपि यथा बौद्धौपनिषदादिदर्शनभेदः स्वेच्छानिवेशितत्वेनानेकनयविकाररूपोऽपेक्षया व्यक्तः, शुद्धपर्यायविशुद्धद्रव्याद्यपेक्षयैव तत्तदर्थव्यवस्थितेः ।
5 नयविशेषतात्पर्यमेतन्न त्वपेक्षेति चेन्न तत्तात्पर्यस्यापि वस्तुसम्बन्धनरूपापेक्षामालम्ब्य प्रवृत्तेरसति सम्बन्धे तात्पर्यस्य प्रामाण्यासंभवात् सा चेयमपेक्षा वैज्ञानिकस्सम्बन्धः । अत एव साम्प्रदायिका विकल्पसिद्धस्य धर्मिणः प्रतिषेधादिसाधनमामनन्ति, ईश्वरो नास्ति प्रकृतिर्नास्तीत्यादौ विशिष्टज्ञानाकारविषयत्वेन तत्र धर्मिणो विकल्पसिद्धत्वात् । न च विशिष्टाप्रसिद्धौ कथं विशिष्टाकारज्ञानमिति वाच्यम्, परेषां विशिष्टशुद्धयोरनतिरेकेऽपि प्रतीतिबला-
10 द्विशिष्टाभावस्यातिरिक्तत्ववत् विशिष्टाभावेऽपि विशिष्टाकारज्ञानसम्भवात् । न चासत्ख्यातिप्रसङ्गोऽत्यन्तासतो विशिष्टाकारस्य भानादिति वाच्यम्, खण्डशः प्रसिद्धधर्मधर्मिरूपसदुपरागेणासदाकारोत्पत्तेः । यद्वाऽनित्यत्वभावनोद्देशेन बौद्धदर्शनस्यैकत्वभावनोद्देशेन वेदान्तिकदर्शनस्य प्रवृत्त्या तत्तद्दर्शनार्थज्ञानेषु तत्तद्भावनोद्देशप्रयुक्तत्वमेवापेक्षात्वम्, तेनैव तस्य सुनयत्वव्यवस्थितेः, अन्यथा बौद्धसिद्धान्ते बाह्यार्थज्ञानादिवादानां वेदान्तिसिद्धान्ते च
15 प्रतिबिम्बाभासावच्छेदकदृष्टिसृष्टिवादादीनामन्योऽन्यप्रतिषिद्धत्वेन जात्या दुर्नयत्वस्य सम्यग्दृष्टिपरिग्रहेणापि निराकर्त्तुमशक्यत्वात् । नहि जात्या हालाहलं सद्वैद्यहस्तोपादानमात्रेणामृतायते, रसायनीकरणन्तु तम्योक्तापेक्षयैवेति दृढतरमवधेयम् । ननूक्तापेक्षयापि शुद्धर्जुसूत्रादीनामितरनयार्थप्रतिषेधप्रवृत्तौ कथं न दुर्नयत्वं, अनिराकृतेतरांशत्व एव सुनयत्वात् दृश्यन्ते च स्वपरसमयेषु स्वेतरनयार्थबाधेनैव प्रगल्भमाना इति चेन्न तत्रेतरार्थनिषेधस्य
20 प्रकृतकोटेरुत्कटत्वकारित्वात् द्वेषबुद्ध्या क्रियमाण इतरनयनिषेध एव दुर्नयत्वात् पूर्वोक्तभावनादार्ढ्यानुकूलस्वविषयोत्कर्षाधानाय क्रियमाणेऽपि प्रतिषेधे सुनयत्वात् जात्या दुर्नयस्यापि चिन्ताज्ञानेन सुनयीकरणात् भावनाज्ञानेनैदम्पर्यार्थप्रधानकप्रमाणवाक्यैकदेशत्वापादनाच्चेत्यधिकमन्यत्र ॥

ननु नयस्य प्रमाणाद्भेदेन लक्षणप्रणयनमयुक्तं, स्वार्थव्यवसायकत्वात्पूर्वमप्रतिज्ञातत्वाच्च,
25 यदि स्वार्थैकदेशव्यवच्छेदकत्वान्नयस्य न स्वार्थव्यवसायकत्वमुच्यते तदा यदि स्वार्थैकदेशो वस्तुरूपस्तदा वस्तुपरिच्छेदकत्वान्नयः प्रमाणमेव, न चेद्वस्तुरूपस्स तर्हि तद्विषयस्य नयस्य मिथ्याज्ञानत्वं स्यादित्यत्राह—

**यथार्थवस्त्वेकदेशग्राहकत्वान्नयस्य यथार्थनिर्णयत्वरूपप्रमाणत्वं ना-**

**स्त्येव । अत एव च नाप्रमाणत्वं, अपि तु प्रमाणाप्रमाणाभ्यां भिन्नं ज्ञानान्तरमेव ॥**

**यथार्थेति** । यथार्थं हि वस्त्वनन्तधर्मात्मकं, तदेकदेशः प्रतिनियतधर्मवान् तत्परिच्छेदकत्वान्नयो न यथार्थपरिच्छेदकः, अतो न प्रमाणं, स्वार्थैकदेशो हि न वस्तु, अन्यस्वार्थैकदेशानामवस्तुत्वप्रसङ्गाद् वस्तुबहुत्वानुषङ्गाद्वा, तथा च वस्त्वेकदेशपरिच्छेदको नयः कथं प्रमाणं स्यात्, कथञ्चिद्वस्तुभिन्नत्वादिवैकदेशस्य कथञ्चित्प्रमाणभिन्नत्वान्नयस्येति भावः । तर्हि मिथ्याज्ञानं स्यादित्यत्राहात एवेति, यथा वस्त्वेकदेशो नावस्तु, इतरैकदेशानामप्यवस्तुत्वप्रसङ्गेन क्वचिदपि वस्तुव्यवस्थानुपपत्तेः, तथा प्रमाणैकदेशो नयोऽपि नाप्रमाणं, किन्तर्हीत्यत्राहापितुइति, प्रमाणैकदेशो नयो राश्यन्तर एवेति भावः, न खलु नयः प्रमाणमेव, एकान्तेन प्रमाणाभिन्नतयाऽनिष्टत्वात् नाप्यप्रमाणमेकान्ततस्ततो भेदस्यानभ्युपगमात्, नापि संशयः, प्रकारस्यैक्यात्, एकत्र विरुद्धोभयप्रकारकज्ञानरूपत्वात्संशयस्य, नापि विपर्ययः, द्रव्यार्थिकादीनां नयानामस्तित्वादिमति कथञ्चिदस्तित्वाद्यवगाहनात्, नवाऽनध्यवसायो विशेषकोट्युल्लेखित्वात् । सप्तभङ्गपरिकरितवस्त्वगाहितात्पर्याभावादेव चालौकिकप्रामाण्याभाववत्त्वं तस्य, तद्वति तत्प्रकारकत्वरूपं लौकिकं प्रामाण्यन्तु न तस्य बाधितमतो न व्यवहारविरोधः, तथा च नयसमुदायसम्पाद्यत्वात्प्रमाणस्य तत्प्रतिज्ञाने तदहूरवर्त्तिनो नयस्य 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यत' इति न्यायेन प्रतिज्ञातत्वमेवेति लक्षणप्रणयनं नाप्रस्तुतमिति भावः ॥ ननु प्रमाणस्य नयसमुदायात्मकत्वात्प्रत्येकं नयानामप्रमाणत्वे तत्समुदायस्य कथमलौकिकप्रमाणता, प्रत्येकं हि सिकतासु तैलमभवत्तासां समुदाये न तद्दृश्यते इति चेन्न यतः प्रत्येकमनर्घ्येषु मणिषु रत्नावलीत्वव्यवहाराभावेऽपि गुणविशेषपरिपाट्या प्रतिबद्धास्त एवासादयन्ति यथा रत्नावलीव्यपदेशं तथैव नयाः स्वविषयपरिच्छेदकत्वेन सुनिश्चिता अपि नान्यपक्षनिरपेक्षाः प्रमाणसंज्ञां प्राप्नुवन्ति त एव द्रव्यध्रौव्यादिषु मिलिताः प्रमाणसंज्ञां लभन्त इति न कोऽपि दोषः ॥

१. ननु नया न समुदायतामासादयन्ति, नापि समेताः प्रमाणतां भजन्ते प्रत्येकावस्थायां मिथ्यादृष्टित्वात्, तत्समुदाये महामिथ्यात्वप्रसङ्गात्, विषबिन्दूनां प्रचुराणां समुदाये महाविषवत्, नापि समेता वस्तुनो गमकाः प्रत्येकावस्थायां तदगमकत्वात् समुदिताश्च ते विवदमाना वस्तुविघातायैव भवन्ति, मैवम् परस्परविरुद्धानामपि आर्हतमतिवशवर्त्तित्वे प्रमाणभावप्रतिपत्तेः राजवशवर्त्तिनानाभिप्रायभृत्यवर्गवत् । प्रत्येकं सावधारणत्वेऽपि समुदितानां निरवधारणानां स्याच्छब्दलाञ्छितत्वेन प्रमाणत्वात् । प्रचुरविषलवानामपि प्रौढमंत्रवादादिभिर्निर्विषीकृत्यामृतरूपताकरणात् । सामान्यतो देशग्राहकाणां नयानां समुदितानां मिथ्यात्वापगमेन सम्यक्त्वसद्भावे क्रमेण विशुद्ध्यमानानां सर्वावरणप्रतिबन्धाभावेन समस्तवस्तुग्राहकत्वात्केवलज्ञानवदिति ॥

अत्र यद्यपि वस्तुन्यनन्तधर्मात्मके एकांशविषयकप्रतिपत्रभिप्रायविशेषस्य नयरूपत्वया वस्त्वंशानामनन्तत्वेनाभिप्रायरूपनया अप्यनन्तप्रकारा एव तथापि चिरन्तनाचार्यैस्सर्वसङ्ग्राहिसप्ताभिप्रायपरिकल्पनाद्वारेण सप्त नयाः प्रतिपादिता इति तथैव विभजते—

**स च नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूतभेदात्सप्तविधः ॥**

**स चेति ।** एते सर्वाभिप्रायसङ्ग्राहकाः कथमिति चेदुच्यते, अभिप्रायास्तावदर्थद्वारेण शब्दद्वारेण वा प्रवर्त्तन्ते, गत्यन्तराभावात्, अर्थश्च सामान्यरूपो विशेषरूपो वा, शब्दोऽपि रूढ्यात्मको यौगिको वा, व्युत्पत्तिरपि सामान्यनिमित्तप्रयुक्ता वा स्यात्तत्कालभाविनिमित्तप्रयुक्ता वा स्यात् तत्र ये केचनार्थनिरूपणप्रवणाः प्रमात्रभिप्रायास्ते सर्वेऽप्याद्ये नयचतुष्टयेऽन्तर्भवन्ति, तत्रापि परस्परं विशकलितौ सामान्यविशेषाविच्छन्ति ये तत्समूहसम्पाद्यो नैगमः । ये पुनः केवलं सामान्यं वाञ्छन्ति तत्समूहजन्यस्सङ्ग्रहः, ये पुनरनपेक्षितशास्त्रीयसामान्यविशेषं लोकव्यवहारमवतरन्तं घटादिकं पदार्थमभिप्रयन्ति तन्निचयजन्यो व्यवहारः । ये सौगतास्तु क्षणक्षयिणः परमाणुलक्षणा विशेषास्सत्या इति मन्यन्ते तत्संघातघटित ऋजुसूत्रः । तथा ये मीमांसका रूढितश्शब्दानां प्रवृत्तिं वाञ्छन्ति नान्यथा तद्द्वारा जन्यः शब्दः । ये तु व्युत्पत्तितो ध्वनीनां प्रवृत्तिं वाञ्छन्ति तन्निवहसाध्यस्समभिरूढः । ये च वर्त्तमानकालभाविव्युत्पत्तिनिमित्तमधिकृत्य शब्दाः प्रवर्त्तन्ते नान्यथेति मन्यन्ते तत्संघटित एवम्भूतः । तदेवं न स कश्चन विकल्पोऽस्ति वस्तुगोचरो योऽत्र नयसप्तके नान्तर्यातीति सर्वाभिप्रायसङ्ग्राहका एत इति ध्येयम् ॥

उक्ताभिप्रायविशेषान् द्विधा सङ्गृह्य दर्शयति—

**आद्यास्त्रयो द्रव्यार्थिकाः, परे चत्वारः पर्यायार्थिकाः, द्रव्यमात्रविषयकत्वात् पर्यायमात्रविषयकत्वाच्च । गुणानां पर्यायेऽन्तर्भावः, ऊर्ध्वतासामान्यस्य द्रव्येऽन्तर्भावः, तिर्यक्सामान्यस्य तु व्यञ्जनपर्यायरूपस्य पर्यायेऽन्तर्भावः । स्थूलाःकालान्तरस्थायिनः शब्दानां सङ्केतविषया व्यञ्जनपर्याया इति प्रावचनिकप्रसिद्धिः । अतो नाधिकनयशङ्का ॥**

**आद्या इति ।** नैगमसङ्ग्रहव्यवहारा इत्यर्थः । द्रव्यार्थिकनया इति । येष्वभिप्रायेषु द्रव्यमेवार्थो विषयतयाऽस्ति न पर्यायास्ते द्रव्यार्थिकनयाः द्रव्यार्थिकमते हि द्रव्यमेव परमार्थतया सत्, अतो द्रव्याद्भिन्नं विकल्पसिद्धं गुणपर्यायरूपं तत्त्वं नेष्टं, संवृतिसतोऽपि तस्य परमार्थतोऽसत्त्वात् यथा शुक्तौ रजतभ्रान्तौ सत्यां बाधावतारानन्तरं रजताभाव-

भानेऽपि तत्र शुक्तेर्भासमानत्वाच्छुक्तेस्सत्यत्वं रजतस्य चासत्यत्वं तथा सुवर्णादिषु परस्पर-
समानाधिकरणानां रूपादिपर्यायाणां परस्परभिन्नकालीनानाञ्च कुण्डलादिपर्यायाणामसत्यत्वं,
तदभावभानेऽपि हेम्नः प्रतिभासनाद्धेमद्रव्यस्य सत्यत्वं तथैव परस्परसमानाधिकरणानां
परस्परसमानकालीनानां रूपरसादीनामसत्यत्वं तदाधारद्रव्यस्यैव सत्यत्वं, कुण्डलादयो
रूपादयश्च वासनाविशेषप्रभवविकल्पसिद्धत्वेनापारमार्थिका इत्येवमभिप्रायो द्रव्यार्थिकनय 5
इति बोध्यम्। परे चत्वार इति, ऋजुसूत्रशब्दसमभिरूढैवम्भूताश्चत्वार इत्यर्थः, पर्याया-
र्थिकनया इति, उत्पादविनाशवदर्थ एव विषयो येषां तादृशा नया इत्यर्थः, एते हि पर्याय-
लक्षणविषयव्यवस्थापनपराः द्रव्यार्थिकनयाभिप्रेतवस्तुव्यवस्थापनयुक्तिप्रतिक्षेपपराः, पर्याया-
र्थिकमते हि द्रव्यपदार्थस्सदृशक्षणसन्ततिरेव न तु पर्यायेभ्यः पृथगस्ति पर्यायेभ्य एवार्थ-
क्रियासम्भवात्, अप्रच्युतानुत्पन्नस्थिरैकस्वभावस्य वस्तुनोऽर्थक्रियाऽसम्भवेनासत्त्वमेव यत- 10
स्सत्त्वमर्थक्रियाकारित्वं, तच्च क्रमयौगपद्याभ्यां व्याप्तं, नहि क्रमाक्रमाभ्यामन्यः प्रकारः
सम्भवति व्याघातात्, तौ च स्थिरेऽसम्भवन्तावर्थक्रियामपि ततो व्यावर्त्तयतः, सा च
व्यावर्त्तमानाऽर्थक्रिया सत्त्वं स्वव्याप्यमपि व्यावर्त्तयतीत्यसन्नेव स्थिरो भाव इत्येवमभि-
प्रायाः पर्यायार्थिकनया इति भावः। एतदभिप्रायेणैवोभयस्य क्रमेण हेतुमाह द्रव्यमात्रेति,
मात्रपदेन पर्यायव्यवच्छेदः, पर्यायमात्रेत्यत्र मात्रपदेन द्रव्यव्यवच्छेदः। एतेन सप्तनया- 15
धिकत्वादनयोर्नयस्य नवविधत्वमिति प्रत्युक्तम्, ननु गुणविषयस्तृतीयो गुणार्थिक इति
कुतो नोक्त इत्यत्राह गुणानामिति, तथा च पर्यायार्थिक इति पर्यायशब्देन सहक्रम-
भाविविशेषमात्रस्य परिग्रहेण तत्रैव सहभाविगुणानामन्तर्भावान्नाधिक्यप्रसङ्गः। ननु
द्रव्यपर्यायव्यतिरिक्तौ सामान्यविशेषौ विद्येते ततस्तद्विषयकं नयद्वयं स्यादित्या-
शङ्कायामाहोर्ध्वतेति, तिर्यगूर्ध्वताभेदेन द्विविधं हि सामान्यं तत्रोर्ध्वतासामान्यस्य 20
द्रव्यात्मकत्वेन द्रव्ये, प्रतिव्यक्ति सदृशपरिणामलक्षणस्य व्यञ्जनापरपर्यायस्य तिर्यक्सा-
मान्यस्य पर्याय एवान्तर्भाव इति भावः। तिर्यक्सामान्यस्य व्यञ्जनापरपर्यायत्वं कथ-
मित्यत्राह स्थूला इति, प्रवृत्तिनिवृत्तिनिबन्धनार्थक्रियाकारित्वोपलक्षितो व्यञ्जनपर्याय इति
भावः, स्थूलाः कालान्तरस्थायिन इत्यनेन भूतभविष्यत्त्वसंस्पर्शरहितवर्त्तमानकालावच्छिन्न-
वस्तुस्वरूपार्थपर्यायस्य व्यवच्छेदः। शब्दानां संकेतविषया इति, शब्दप्रवृत्तिनिमित्तभूता 25
इत्यर्थः वैसादृश्यविवर्त्तलक्षणविशेषस्य पर्यायरूपत्वस्य स्पष्टतया पृथक्पर्यायान्तर्भूतत्वेन स

---

१. एतन्मते कालनिष्ठात्यन्ताभावाप्रतियोगित्वमेव सत्यत्वम्, द्रव्यस्य हि कदापि नास्त्यत्यन्ताभाव इति तत्सत्यम्, पर्यायाणान्तु तत्प्रतीयमानकाल एव तत्सत्ताभानेनेतरकाले तदभावसत्त्वादसत्यत्वमिति बोध्यम्॥

नोक्तः । निर्गमयति अत इति । अत्र द्रव्यार्थिकनयस्य त्रैविध्योक्तिर्वादिसिद्धसेनदेवसूरिम-
तानुसार्य्यभिप्रायेण, जिनभद्रगणिक्षमाश्रमणवचनानुसारिणामभिप्रायेण त्वाद्याश्चत्वारो द्रव्या-
र्थिकनया बोध्याः, तत्र द्रव्यमृजुसूत्रो यदि नाभ्युपेयात्तदा " उजुसुयस्स एगे अणुवउत्ते एगं
दव्वावस्सयं पुहुत्तं णेच्छइ " इति सूत्रं विरुध्येतेति क्षमाश्रमणानुयायिनामभिप्रायः । तार्कि-
5 कानुसारिणस्तु अतीतानागतपरकीयभेदपृथक्त्वपरित्यागादृजुसूत्रेण स्वकार्यसाधकत्वेन स्व-
कीयवर्त्तमानवस्तुन एवोपगमान्नास्य तुल्यांशध्रौव्यांशलक्षणद्रव्याभ्युपगमः, अत एव नास्या-
सङ्कटितभूतभाविपर्यायकारणत्वरूपद्रव्यत्वाभ्युपगमोऽपि, अध्रुवधर्माधारांशद्रव्यमपि नास्य
विषयः, शब्दनयेष्वतिप्रसङ्गात्, उक्तसूत्रन्तु अनुपयोगांशमादाय वर्त्तमानावश्यकपर्याये
द्रव्यपदोपचारात्समाधेयम्, पर्यायार्थिकेन मुख्यद्रव्यपदार्थस्यैव प्रतिक्षेपादिति वदन्ति ।
10 अत्र द्रव्यास्तिको द्विविधः शुद्धाशुद्धभेदात्, सङ्ग्रहनयाभिमतविषयप्ररूपकश्शुद्धो द्रव्या-
र्थिकः, सङ्ग्रहनयाभिप्रायतः प्ररूपणाविषयस्य सर्वत्र भावमात्रत्वात् भेदप्रतिभासस्तु भेद-
प्रतिपादकागमोपहतान्तःकरणानां तिमिरोपप्लुतदृशामेकशशलाञ्छनमण्डलस्यानेकत्वावभा-
सवदसन्नेवेति । व्यवहारनयमतावलम्बी द्रव्यार्थिकोऽशुद्धो हेयोपादेयोपेक्षणीयवस्तुविषय-
निवृत्तिप्रवृत्त्युपेक्षालक्षणा हि व्यवहाराः, तत्र परस्परं विभिन्नस्वभावा भावास्सद्रूपतया समु-
15 ल्लसन्ति, असद्रूपत्वे तादृशव्यवहारा एव न भवेयुः, न ह्येकान्ततः सन्मात्राविशिष्टेषु सङ्ग्र-
हाभिमतेषु पृथक्स्वरूपतया परिच्छेदो बाधितरूपो व्यवहारनिबन्धनस्सम्भवतीत्यतो
व्यवहारो नानारूपतया सत्तां व्यवस्थापयतीत्यशुद्धा द्रव्यार्थिकप्रकृतिः । नैगमनयाभि-
प्रायस्तु शुद्धाशुद्धरूपराश्यन्तरेण न वाच्यः क्वचिदपि तथानभिधानात्, सामान्यग्राहिणो
नैगमस्य सङ्ग्रहे विशेषग्राहिणश्च व्यवहारेऽन्तर्भूतत्वात् पर्यायस्याद्या प्रकृतिः ऋजुसूत्रो
20 नित्याशुद्धः, शब्दश्शुद्धः, समभिरूढः शुद्धतरः, एवम्भूतस्तु शुद्धतम इति ॥

सम्प्रति नैगमस्वरूपमाह—

**तत्र गौणमुख्यभावेन धर्मद्वयधर्मिद्वयधर्मधर्म्युभयान्यतमविषयकं**

---

१. तथा च परस्परविविक्तसामान्यविशेषविषयत्वाद् द्रव्यपर्यायार्थिकावेव नयौ न च तृतीयं प्रकारान्तरमस्ति यद्विषयोऽन्यस्ताभ्यां व्यतिरिक्तो नयः स्यात् तद्भेदा एव नैगमादयः । न च द्रव्यपर्याययोस्सम्बन्धरूपोऽन्यो विषयोऽस्ति तस्मात्तद्विषयेण केनचिन्नयेन भाव्यमिति वाच्यम्, भेदाभेदविनिर्मुक्तस्यान्यस्य सम्बन्धस्याभावात् भावे वा द्रव्यपर्यायविकल्पानतिवृत्तेः, तत्स्वभावातिक्रमे वा नभस्सरोजसदृशत्वप्रसक्तेः, ताभ्यां सर्वथाऽर्थान्तरस्य सम्बन्धस्य प्रतिपादनोपायासम्भवात् सम्बन्धस्य ताभ्यामसम्बन्धे च तयोरेव स इति व्यपदेशासम्भवात् सम्बन्धान्तरकल्पनायामनवस्थापत्तेश्च न कोऽपि सम्बन्धस्सिद्ध्यतीति न कोऽप्येतन्नयद्वयबहिर्भाविविषयस्सिद्ध्यतीति भावः ॥

**विवक्षणं नैगमनयः। यथा पर्वते पर्वतीयवह्निरिति। अत्र वह्न्यात्मको धर्मः प्रधानं विशेष्यत्वात्, पर्वतीयत्वरूपव्यञ्जनपर्यायो गौणो वह्निविशेषणत्वात्, एवमनित्यज्ञानमात्मनः, घटे नीलं रूपमित्यादयो धर्मद्वयविषयकदृष्टान्ता भाव्याः ॥**

तत्रेति। सप्तसु नयेषु मध्य इत्यर्थः। निगम्यन्ते परिच्छिद्यन्तेऽर्था इति निगमाः, तत्र भवो योऽभिप्रायो नियतपरिच्छेदरूपस्स नैगमः, अर्थाश्रयेणोत्पत्तिमत्त्वमिति भावः। अर्थश्च लोकप्रसिद्धः, व्यवहाराश्च सामान्याश्रया अन्यथाऽनुगतबुद्ध्यभावः स्यात् विशेषाश्रयाः, तदभावे व्यावृत्तिबुद्ध्यभावप्रसङ्गादित्येवंविधाः, तथा च तल्लक्षणमाह गौणेति, मुख्यामुख्यतया धर्मद्वयस्य पर्याययोः, धर्मिद्वयस्य द्रव्ययोर्धर्मधर्म्युभयस्य पर्यायद्रव्ययोश्च विवक्षणमित्यर्थः, ननु स्वतंत्रतया सामान्यविशेषोपगमे दुर्नयत्वं काणादवत्स्यात्। शबलतया तदभ्युपगमे च प्रमाणत्वमेव यथास्थानं प्रत्येकं गौणमुख्यभावेन मूलोक्तरीत्याऽभ्युपगमे च सङ्ग्रहव्यवहारान्यतरप्रवेशः स्यादिति चेन्न, तृतीयपक्षाश्रयणे दोषाभावात् क्वचित्सङ्ग्रहव्यवहारविषयत्वेऽपि क्वचिदेकस्य सत उभयग्रहणोपयोगव्यावृत्तत्वेन तदतिरेकात्, अत एव नयद्वयसंयोगेन नान्यथासिद्धिः प्रत्येकविषयताद्वयातिरिक्तस्वतंत्रविषयताकत्वादस्य, तथा च गौणमुख्यभावेन सामान्यविशेषोभयस्वीकर्तृजातीयैकदेशबोधत्वं नैगमस्य लक्षणम्। अयञ्च नयः सत्तालक्षणं महासामान्यं द्रव्यत्वादीन्यवान्तरसामान्यानि तथाऽन्त्यान् विशेषान् सकलासाधारणरूपलक्षणानवान्तरविशेषानपेक्षया परस्परव्यावर्त्तनक्षमान् सामान्यादत्यन्तविनिर्लुठितस्वरूपानभिप्रैति। क्रमेणामुमुदाहरति यथेति, व्यञ्जनपर्याययोर्मुख्यामुख्यतया विवक्षणे उदाहरणमिदम्, तदेव सङ्गमयति अत्रेति, उदाहरणेऽस्मिन्नित्यर्थः, दृष्टान्तान्तराण्याहैवमिति, अत्र ज्ञानं प्रधानं विशेष्यत्वात्, अनित्यत्वमप्रधानं विशेषणत्वात्। रूपं प्रधानं विशेष्यत्वात् नैल्यमप्रधानं विशेषणत्वादिति क्रमेण मुख्यामुख्यभावो विज्ञेयः ॥

धर्मिद्वयविषयकमुदाहरति—

**काठिन्यवद्द्रव्यं पृथिवीत्यादौ पृथिवीरूपधर्मिणो विशेष्यत्वान्मुख्यत्वं काठिन्यवद्द्रव्यस्य विशेषणत्वाद्गौणत्वम् यद्वा काठिन्यवद्द्रव्यस्य विशेष्यत्वान्मुख्यता, पृथिव्या विशेषणत्वाद्गौणता। एवं रूपवद्द्रव्यं मूर्त्तं, पर्यायवद्द्रव्यं वस्त्वित्यादीनि धर्मिद्वयविषयकविवक्षणे उदाहरणानि ॥**

काठिन्यवदिति । द्रव्ययोर्मुख्यामुख्यभावेन विवक्षणे उदाहरणमिदम्, तत्सङ्गमयति, पृथिवीति, विशेष्यविशेषणभावे विनिगमनाविरहेण काठिन्यवद्द्रव्यं पृथिव्यास्त इति विवक्षायां गौणमुख्यभावः प्रतिपादितः, यदा तु पृथिवी काठिन्यवद्द्रव्यं वर्त्तत इति विवक्ष्यते तदाह यद्वेति, अपरमुदाहरणमाहैवमिति, रूपवद्द्रव्यं मूर्त्तं वर्त्तत इति विवक्षणे मूर्त्तं प्रधानं विशेष्यत्वात् रूपवद्द्रव्यं गौणः विशेषणत्वात् मूर्त्तं रूपवद्द्रव्यं वर्त्तत इति विवक्षायान्तु रूपवद्द्रव्यं विशेष्यत्वात्प्रधानं, मूर्त्तमप्रधानं विशेषणत्वादिति, पर्यायवद्द्रव्यं वस्त्विति विवक्षायां वस्तुनो विशेष्यत्वान्मुख्यता, पर्यायवद्द्रव्यस्य विशेषणत्वाद्गौणता, वस्तु पर्यायवद्द्रव्यमित्यत्र तु वस्तुनो विशेषणत्वाद्गौणता, पर्यायवद्द्रव्यस्य च विशेष्यत्वात्प्रधानता बोध्येति भावः ॥

धर्मधर्म्युभयविषयकविवक्षणे दृष्टान्तयति—

**रूपवान् घट इत्यत्र तु घटस्य धर्मिणो विशेष्यत्वात्प्रधानता, रूपस्य धर्मस्य तद्विशेषणत्वाद्गौणता । इत्थं ज्ञानवानात्मा, नित्यसुखी मुक्तः क्षणिकसुखी विषयासक्तजीव इत्यादीनि धर्मधर्म्युभयविषयकविवक्षणे निदर्शनानि ॥**

रूपवानिति । सङ्गमयति घटस्येति । दृष्टान्तान्तराण्याहेत्थमिति, आत्मनो धर्मिणो विशेष्यत्वात् ज्ञानस्य धर्मस्य विशेषणत्वात् मुक्तस्य धर्मिणो विशेष्यत्वान्नित्यसुखस्य धर्मस्य विशेषणत्वात् धर्मिणो विषयासक्तजीवस्य विशेष्यत्वाद्धर्मस्य क्षणिकसुखस्य विशेषणत्वात्प्रधानत्वं गौणत्वञ्च भाव्यम् । न चास्य तृतीयप्रकारस्य प्रमाणत्वं शङ्क्यम्, धर्मधर्मिणोः प्राधान्येनात्र ज्ञप्तेरभावात् तयोरन्यतर एव हि नैगमनयेन प्रधानतयाऽनुभूयते प्राधान्येन तदुभयावगाहिन एव ज्ञानस्य प्रमाणत्वात् । स पुनर्नैगमोऽनेकधा व्यवस्थितः प्रतिपत्त्रभिप्रायवशान्नयव्यवस्थानात्, यथा पुरुष एवेदं सर्वमिति, पुरुषोऽप्येकत्वनानात्वभेदात्कैश्चिदभ्युपगतो द्वेधा, नानात्वेऽपि तस्य कर्तृत्वाकर्तृत्वभेदो परैराश्रितः, कर्त्तृत्वेऽपि सर्वगतेतरभेदः, असर्वगतत्वेऽपि शरीरव्याप्यव्यापिभ्यां भेदः अव्यापित्वेऽपि मूर्त्तेतरभेदः, अपरैस्तु प्रधानकारणिकं जगदभ्युपगतम् तत्रापि सेश्वरनिरीश्वरभेदोऽभ्युपगतः, अन्यैस्तु परमाणुप्रभवत्व-

१. नयेऽत्र हि प्रधानोपसर्जनभावस्य विशेष्यविशेषणभावप्रयुक्तत्वं न तु कल्पनाप्रयुक्तत्वं, न चैतावता प्रामाण्यप्रसङ्गः, धर्मधर्मिणोः प्राधान्येनाबोधकत्वात्, नैगमो हि तयोरन्यतरस्यैव प्रधानत्वमभ्युपैति । प्रधानतया तु तदुभयात्मकं वस्त्वनुभवद्विज्ञानं प्रमाणमेव, न चात्र नये विशेषणं कल्पितमेवेति वाच्यम्, पर्यायार्थिक एव द्रव्यस्य कल्पितस्य विशेषणत्वात् द्रव्यार्थिके तु पर्यायस्याकल्पितस्यापि विशेषणत्वात्, उभयविषयकेण नैगमेनोभयविषयस्य सत्यताया एवाभिमानादिति ॥

मभ्युपगतं जगतः, तत्रापि सेश्वरनिरीश्वरभेदोऽभ्युपगतः, सेश्वरपक्षेऽपि कर्मसापेक्षत्वान-
पेक्षत्वाभ्यां भेदाभ्युपगमः, कैश्चित्स्वभावकालयादृच्छिकवादाः समाश्रिताः, तेष्वपि सापेक्ष-
त्वानपेक्षत्वाभ्युपगमाद्भेदव्यवस्थाऽभ्युपगतैव । तथा कारणं नित्यं कार्यमनित्यमित्यपि द्वैतं
कैश्चिदभ्युपगतं तत्रापि कार्यं स्वरूपं नियमेन त्यजति नवेत्ययमपि भेदाभ्युपगमः, एवम्भू-
तैरेव मूर्त्तमारभ्यते, मूर्त्तैरमूर्त्तं, अमूर्त्तैर्मूर्त्तमित्याद्यनेकधा प्रतिपन्नभिप्रायतोऽनेकधा निगम- 5
नान्नैगमोऽनेकभेद इति ॥

अथ सङ्ग्रहं लक्षयति—

**स्वव्याप्ययावद्विशेषेष्वौदासीन्यपूर्वकं सामान्यविषयकाभिप्रायवि-
शेषस्सङ्ग्रहः । स द्विविधः परापरभेदात् । परसामान्यमवलम्ब्य विधा-
यौदासीन्यं तद्विशेषेषु अर्थानामेकतया ग्रहणाभिप्रायः परसङ्ग्रहः । यथा 10
विश्वमेकं सदविशेषादिति । अनेन वक्त्रभिप्रायेण सत्स्वरूपसामान्येन
विश्वस्यैकत्वं गृह्यते, एवं शब्दानामप्रयोगाच्च विशेषेषूदासीनता प्रती-
यते । अपरसामान्यमवलम्ब्य तथाभिप्रायोऽपरसङ्ग्रहः । यथा धर्मा-
धर्माकाशपुद्गलजीवानामैक्यं, द्रव्यत्वाविशेषादिति । अनेनाप्यभिप्राय-
विशेषेण द्रव्यत्वरूपापरसामान्येन धर्मादीनामेकत्वं तद्विशेषेषूदासी- 15
नत्वञ्च गृह्यते ॥**

**स्वव्याप्येति** । स्वं महासामान्यं सत्त्वं तद्व्याप्या यावन्तो विशेषाः द्रव्यत्वादयः तेष्वौ-
दासीन्यपूर्वकं परस्परंताननिराकुर्वन् सत्तारूपसामान्यविषयको द्रव्यत्वादिरूपसामान्य-
विषयको वाऽभिप्रायविशेषस्स सङ्ग्रह इत्यर्थः । सामान्यमात्राभ्युपगमप्रवणैकदेशबोधत्वं
लक्षणम् । परापरसामान्योभयग्राहित्वन्तु न लक्षणं प्रत्येकग्राहिण्यव्याप्तेः प्रत्येकग्राहित्वमपि 20
न लक्षणमननुगमात्, अयं हि सङ्ग्रहो मन्यते ननु भावलक्षणसामान्याद्व्यतिरिच्यमान-
मूर्त्तयो विशेषा अव्यतिरिच्यमाना वा, नाद्यः पक्षो निःस्वभावतापत्तेः, भावव्यतिरेकित्वात्,
गगनारविन्दवत् । न द्वितीयो भावमात्रत्वापत्तेः, तथा हि भावमात्रं विशेषास्तदभिन्नत्वात्
यद्यतोऽभिन्नं तत्तदेव, यथा भावस्यैव स्वरूपम्, अभिन्नाश्च विशेषा अतस्तद्रूपा एव । ननु
च यदि भावमात्रमेव तत्त्वं तदा तस्य सर्वत्राविशेषाद्य एते प्रतिप्राणि प्रसिद्धा स्तम्भेभकुम्भा- 25

१. सङ्ग्रहमतेनाशेषविशेषतिरोधानप्रकारमादर्शयति नन्विति । २. भिन्नत्वे भावलक्षणतो विशेषाणां स
र्वर्गवेत्यत्र नियामकाभावेन भावस्वभावशून्यत्वान्निःस्वभावत्वं स्यादित्याशयेनाह भावव्यतिरेकित्वादिति ॥

म्भोरुहादिविशिष्टवस्तुसाध्यव्यवहारास्ते सर्वेऽपि प्रलयमापद्येरन् अतो विशेषा अपि विविक्त-
व्यवहारहेतवोऽभ्युपगन्तव्याः मैवम्, व्यवहारस्याप्यनाद्यविद्याबलप्रवर्त्तितत्वात् तेन पार-
मार्थिकप्रमाणप्रतिष्ठिततत्त्वप्रतिबन्धाभावात् किञ्च विशेषाग्रहो विशेषेण त्याज्यः, विशेष-
व्यवस्थापकप्रमाणाभावात् तथाहि भेदरूपा विशेषाः, न च किञ्चित्प्रमाणं भेदमवगाहते,
5 प्रत्यक्षं हि तावद्भावसम्पादितसत्ताकं तमेव साक्षात्कर्त्तुं युक्तम् नाभावम्, तस्य सकलश-
क्तिविरहरूपतया तदुत्पादने व्यापाराभावात्, अनुत्पादकस्य साक्षात्कारकरणे सर्वसाक्षा-
त्करणप्रसङ्गात् तथा च विशेषाभावात्सर्वो द्रष्टा सर्वदर्शी स्यात् अनिष्टञ्चैतत् तस्माद्भाव-
ग्राहकमेव तदिष्टम्, स च भावस्सर्वत्राविशिष्ट इति तथैव तेन ग्राह्यः, तदुत्तरकालभावि-
विकल्पो घटोऽयं पटादिर्न भवतीत्येवमाकारं रचयन्नविद्यामूलत्वान्न प्रमाणं तन्न प्रत्यक्षा-
10 द्विशेषावगतिः, नाप्यनुमानादिभ्यः, प्रत्यक्षमूलकत्वाच्छेषप्रमाणवर्गस्य, तस्मात्सामान्यमेव
परमार्थो न विशेषा इति सङ्ग्रहः । तं विभजते स इति, परसङ्ग्रहमाह परसामान्यमिति
सन्मात्रमित्यर्थः, तद्विशेषेष्विति सत्त्वावान्तरप्रभेदेष्वित्यर्थः, उदाहरति यथेति, एवमुक्ते
हि सदिति ज्ञानाभिधानानुवृत्तिलिङ्गानुमितसत्ताकत्वेनैकत्वमशेषार्थानां सङ्गृह्यत इत्यभि-
प्रायमाहानेनेति, सन्ति विशेषा इत्यनुक्तत्वाद्विशेषेपूदासीनता व्यज्यत इत्याहैवं शब्दाना-
15 मिति, उदासीनतेति, प्रत्यनीकधर्मेषूपेक्षेत्यर्थः, धर्मान्तरादानोपेक्षाहानिलक्षणत्वात्प्रमाण-
नयदुर्नयानां, प्रमाणात्तदतत्स्वभावप्रतिपत्तेर्नयात्तत्प्रतिपत्तेर्दुर्नयादन्यनिराकृतेश्चेति भावः ।
अथ द्वितीयभेदमाहापरेति, द्रव्यत्वादीन्यपरसामान्यानीति भावः, सत्तापेक्षया कतिपय-
व्यक्तिनिष्ठत्वाद्द्रव्यत्वस्यापरसामान्यत्वं बोध्यम्, तथाभिप्राय इति, स्वव्याप्यावान्तरविषय-
कोपेक्षासहकृततदर्थैकत्वग्रहणाभिप्राय इत्यर्थः, अवान्तरविषयप्रतिक्षेपाभिप्रायत्वे दुर्नयत्वप्र-
सक्तेः । दृष्टान्तमस्याह यथेति, द्रव्यं द्रव्यमित्यभिन्नज्ञानाभिधानलक्षणलिङ्गानुमितद्रव्यत्वा-
20 त्मकत्वेन धर्मादीनां षण्णामैक्यं सङ्गृह्यत इत्यभिप्रायेणाहानेनेति, गौणव्यवहारास्तत्तद्व्या-
वृत्तिरूपविशेषाश्च नैगमव्यवहारयोरिष्टाः, एतदुभयापेक्षया स्वविषयोत्कर्षाभिमानिना
सङ्ग्रहेण तु ते नेष्यन्ते तथा च नैगमव्यवहारसम्मतोपचारविशेषानवलम्बित्वादस्य शुद्धत्वं,
स्वसमयोचितोपचारविशेषयोः क्वचिदवलम्बनेनापि तन्नापोद्यत इति ध्येयम् ॥

---

१. ननु सामान्यमेव प्रमाणप्रतिष्ठं न विशेषा इति न युक्तं विनिगमनाविरहेण वैपरीत्यस्यापि वक्तुं शक्यत्वादित्याशङ्कायां दोषान्तरमाह किञ्चेति ॥ २. भावेन सहैव योग्यत्वादिन्द्रियस्य सम्बन्धादिति भावः । भेदस्याभावात्मकस्यायोग्यत्वेन विषयमुद्रया कारणत्वासम्भवेनानुत्पादकत्वं तथापि तस्येन्द्रियेण प्रत्यक्षत्वाभ्यु-पगमे सर्वेषामपीन्द्रियेण ग्रहणं स्यात्, यद्वा वस्तुतोऽभावग्रहणेऽयोग्यतयाऽनुत्पादकेनेन्द्रियेण तज्ज्ञानं जायत इत्यभ्युपगमे सर्वेषामपि तेन ग्रहणं स्यादित्याशयेनाहानुत्पादकस्येति ॥

श्रीवादिदेवसूरिसूत्रावलम्बनेन व्यवहारनयस्य लक्षणमाह—

**प्रतिषेधपरिहारेण सङ्ग्रहविषयीभूतार्थविषयकविभागप्रयोजकाभिप्रायो व्यवहारनयः। यथा सत्त्वधर्मेणैकतया सङ्गृहीतस्य सतो द्रव्यपर्यायाभ्यां विभागकरणाभिप्रायो यत्सत्तद्द्विधा, द्रव्यं पर्यायश्चेति। एवं द्रव्यत्वेन सङ्गृहीतस्य द्रव्यस्य धर्मादिरूपेण षोढा विभागकरणाभिप्रायो 5 यद्द्रव्यं तद्धर्मादिरूपेण षोढेति ॥**

प्रतिषेधपरिहारेणेति, सुनयीकरणार्थमेतत्। सङ्ग्रहगृहीतान् सत्त्वाद्यर्थाननुपेक्ष्य तद्विभजनाविषयो योऽभिप्रायस्स व्यवहारनय इत्यर्थः, परसामान्यमवलम्ब्य तद्विभागाभिप्रायं निदर्शयति यथेति, अपरसामान्यमवलम्ब्य तमाहैवमिति। "वच्चइ विणिच्छिअत्थं ववहारो सव्वदव्वेसु" ति निर्युक्तिप्रतीकानुसाराद्विनिश्चितार्थप्रापकत्वं[1] व्यवहारस्य लक्षणं लभ्यते, 10 विशेषेणावह्रियते निराक्रियते सामान्यमनेनेति निरुक्त्यनुसारात्। विनिश्चितार्थप्राप्तिश्चास्य सामान्यानभ्युपगमे सति विशेषाभ्युपगमात् जलाहरणाद्युपयोगिनो घटादिविशेषानेवायमङ्गीकरोति न तु सामान्यम्, गां बधानेत्याद्युक्ते गोत्वबन्धनाद्यध्यवसायस्य कस्याप्यनुदयात्। न च कथं गोष्वनुगतव्यवहार इति वाच्यमन्यापोहादिनापि तदुपपत्तेः शब्दानुगमादेवानुगतव्यवहारोपपत्तेश्च। "लौकिकसम उपचारप्रायो विस्तृतार्थो व्यवहार" 15 इति तत्त्वार्थभाष्यानुरोधात्तु शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणपक्षपाती गौणीवृत्त्याऽतिशयेन व्यवहारकरः नानाव्यक्तिकशब्दसङ्केतग्रहणप्रवणो यो बोधस्स व्यवहार इति तदर्थः, उपचारबहुलाध्यवसायवृत्तिनयत्वव्याप्यजातिमत्त्वन्तु[2] लक्षणम्। उपचाराधिक्यं यथा गिरिर्दह्यते, अध्वा याति, कुण्डिका स्रवति, इत्यादौ प्रथमे गिरिपदस्य गिरिस्थतृणादौ लक्षणा, अतिशयदग्धत्वप्रतीतिः फलं द्वितीये मार्गगन्तृपुरुषसमुदाये लक्षणा नैरन्तर्यप्रतीतिः फलं, 20 तृतीये कुण्डिकास्थोदके लक्षणाऽनिबिडत्वप्रतीतिः प्रयोजनमित्येवं भाव्यम्। लक्ष्यार्थे[3] मुख्यार्थप्रतीतिश्चाभेदाध्यवसायात्। विशेषप्राधान्यादेवायं विस्तृतार्थः, प्रधानता च

---

१. यथा सत्यपि पञ्चवर्णादौ भ्रमरे कृष्णवर्ण एव लोकस्य निश्चयो भवति तस्माद्विनिश्चितार्थप्रापको व्यवहारनयः तस्यैव गमकत्वात्प्ररूपकत्वाच्च, स एव हि लोकव्यवहारानुकूलतया स्पष्टतमः, तस्माच्छेषवर्णादीनयं नयो मुञ्चतीति विनिश्चितार्थप्रापकत्वमस्य बोध्यम् ॥ २. उपचारबहुलाध्यवसायत्वमात्रस्य लक्षणत्वेऽनुपचरितव्यवहारेऽव्याप्तिरिति नयत्वव्याप्यजातिमत्त्वमुक्तं, तावन्मात्रस्य नैगमसङ्ग्रहादावपि सत्त्वाद्रूत्त्यन्तम्, अत एव नयत्ववत्त्वमुपेक्ष्य नयत्वव्याप्यजातिमत्त्वमुक्तं, क्वाचित्कोपचाराध्यवसायमादाय नैगमाद्यतिव्याप्तिवारणाय बहुलेति ॥ ३. ननु गिरिस्थतृणादिमार्गगन्तृपुरुषसमुदायकुण्डिकास्थजलादौ गिरिमार्गकुण्डिकादिमुख्यार्थप्रतीतिः कथमित्यत्राह लक्ष्यार्थ इति ॥

व्यक्तिष्वेवोपयुक्ततया सङ्केताद्याश्रयणात् । वस्तुतः पञ्चवर्णद्विगन्धपञ्चरसाष्टस्पर्शशरीरवतो भ्रमरादेश्श्यामत्वादिनैव निश्चयनादसौ लौकिकः, लोकैः कृष्णवर्णत्वेनैवास्याङ्गीकारात्, उद्भूतवर्णविवक्षयैवाभिलापादिव्यवहारप्रवृत्तेः कृष्णो भ्रमर इत्यादेरनुद्भूतत्वेनेतरवर्णाविवक्षणान्न भ्रान्तत्वम्, तात्पर्यंशं प्रति प्रामाण्याल्लोकव्यवहारानुकूलविवक्षाप्रयुक्तत्वाच्चास्य
5 भावसत्यत्वं, पीतो भ्रमर इत्यादीनान्तु न तथा, लोकव्यवहारानुकूलत्वात्, नापि निश्चयतोऽस्य भावसत्यत्वं पञ्चवर्णपर्याप्तिमति पञ्चवर्णप्रकारकत्वाभावेनावधारणाक्षमत्वात् । ननु पञ्चवर्णो भ्रमर इत्यादिवाक्यानां कथं न व्यवहारनयानुरोधित्वं तस्यापि व्यवहारानुगुण्यात्, आगमप्रतिपादितार्थेऽपि व्युत्पन्नानां व्यवहारोपलब्धेः, न च लोकेनास्य वाक्यस्य बाधितार्थविषयकत्वेन न व्यवहारानुरोधित्वमिति वाच्यम् आत्मा न रूपवानित्यादिवाक्यस्यापि
10 अव्यवहारकत्वापत्तेः,आत्मगौरत्वादिबोधकलोकप्रमाणबाधितार्थबोधकत्वात्, अभ्रान्तलोकस्य विवक्षणे चोभयत्र साम्यमेवेति चेन्न पञ्चवर्णो भ्रमर इत्यादौ कृष्णेतरवर्णांशे व्यावहारिकविषयताया अभावात्, तत्तन्नयाभिप्रायप्रयुक्तो हि शब्दः, तत्र तन्नयीयविषयतैव शाब्दबोधिका, ततो नोक्तव्यवहार इति ॥

अथर्जुसूत्रं स्वरूपयति—

15 **द्रव्यं गौणीकृत्य प्राधान्यतया वर्त्तमानक्षणवृत्तिपर्यायमात्रप्रदर्शनाभिप्रायविशेष ऋजुसूत्रः । यथा सम्प्रति सुखपर्यायोऽस्ति दुःखपर्यायोऽस्ति द्वेषपर्यायो वास्तीत्यभिप्रायाः । अत्र हि सदप्यात्मद्रव्यं नार्प्यते सुखादिपर्यायास्तु प्रधानेन प्रकाश्यन्ते ॥**

द्रव्यमिति, ऋजु–अवक्रं सूत्रयति गमयत्यभ्युपगच्छतीति ऋजुसूत्रः अतीतानागतयोः
20 पर्याययोर्विनाशानुत्पत्तिभ्यामभावेन तदभ्युपगमे कुटिलत्वं ततस्तत्परिहारेण परोपकारप्रवणवार्त्तमानिकपर्यायप्ररूपणमेवाकुटिलं प्ररूपणमिति ऋजुसूत्रशब्दभावः, तदेवाह द्रव्यं गौणीकृत्येति नयत्वरक्षायै विशेषणमिदम्, अस्य मते भावत्वं वर्त्तमानत्वव्याप्यम्, तथाहि विनष्टत्वादतीतस्यानागतस्यालब्धात्मलाभत्वात् अविशिष्यमाणतया च सकलशक्तिविकलरूपत्वात्

१. एवशब्देन सामान्यस्य संकेतजप्रतीत्यविषयत्वं सूचितम् शब्दानां हि सामान्ये संकेतोऽनुपयुक्तः घटमानयेत्यादिवाक्यात् शाब्दबोधानुत्पत्तिप्रसङ्गात् नहि घटत्वस्यानयनं सम्भवति, अमूर्त्तत्वादिति भावः ॥
२. तत्तन्नयाभिप्रायप्रयुक्तो हि शब्दः, तथा च पञ्चवर्णो भ्रमर इति शब्दाभिलापो निश्चयनयेन, अतः प्रोक्ताभिलापजन्यशाब्दबोधे कृष्णेतररूपांशे न व्यावहारिकी विषयताऽस्ति लोकव्यवहाराननुगुणत्वात् किन्तु तत्र नैश्चयिकी विषयतैव कृष्णांशे तूभयविषयतेति भावः ॥

**पुलाकबकुशप्रतिसेवनाकुशीला उत्कर्षेणानूनैकाक्षराणि दशपूर्वाणि श्रुतानि धारयन्ति, कषायकुशीला निर्ग्रन्थाश्च चतुर्दशपूर्वधराः, जघन्येन पुलाकानां श्रुतमाचारवस्तु, बकुशकुशीलनिर्ग्रन्थानामष्टौ प्रवचनमातरः, स्नातकास्तु श्रुतरहिताः केवलज्ञानवत्त्वात् ॥**

पुलाकेति । अनूनेति, एकेनाप्यक्षरेणान्यूनानि दशपूर्वाणीत्यर्थः । कषायेति चतुर्दशेति, उत्कर्षेणेदं बोध्यम्, आचारवस्त्विति, नवमपूर्वान्तःपातितृतीयमाचारवस्तु यावत्तेषां श्रुतमित्यर्थः । अष्टौ प्रवचनमातर इति, एतत्पालनरूपत्वाच्चारित्रस्य, तथा च चारित्रिभिरवश्यं तावज्ज्ञानवद्भिर्भवितव्यं चारित्रस्य ज्ञानपूर्वकत्वात् तज्ज्ञानञ्च श्रुतादिति तेषामष्टप्रवचनमातृप्रतिपादनपरं श्रुतं बोध्यम्, अवशिष्टं मूलं स्फुटार्थम् ॥ 5

प्रतिसेवनाद्वारमाह— 10

**क्षपाभोजनविरतिसहितपञ्चमूलगुणानामन्यतमं बलात्कारेण प्रतिसेवते पुलाकः, बकुशो मूलगुणाविराधक उत्तरगुणांशे विराधकः, प्रतिसेवनाकुशीलो मूलगुणाविराधक उत्तरगुणेषु काञ्चिद्विराधनां प्रतिसेवते, कषायकुशीलनिर्ग्रन्थस्नातकानां प्रतिसेवना नास्ति ॥**

क्षपाभोजनेति । बलात्कारेणेति राजादिकृतबलात्कारेण न तु स्वरसत इति तत्त्वार्थभाष्यानुसारेण । भगवत्यनुसारेण पञ्चानां महाव्रतानामन्यतमं प्रतिसेवेत, उत्तरगुणांश्च प्रतिसेवमानो दशविधप्रत्याख्यानान्यतमं प्रतिसेवेतेति, उत्तरगुणांशे विराधक इति, दशविधप्रत्याख्यानान्यतमं विराधयतीत्यर्थः । काञ्चिदिति तत्त्वार्थभाष्यानुसारेणेदम्, भगवत्यान्तु प्रतिसेवनाकुशीलः पुलाकवदुक्तः ॥ 15

तीर्थद्वारमाह— 20

**पुलाकादयस्सर्वे सर्वेषां तीर्थकृतां तीर्थेषु भवन्ति ॥**

पुलाकादय इति । तरन्त्यनेनेति तीर्थं प्रवचनं प्रथमगणधरो वा, तीर्यतेऽनेनेति वा तीर्थं सङ्घो ज्ञानदर्शनचारित्रगुणयुतः, प्रवचनमपि श्रुतज्ञानरूपत्वात्तीर्थमेव, तत्र जैनमेव तीर्थं अभिप्रेतार्थसाधकं, सम्यक्श्रद्धानोपलब्धिक्रियात्मकत्वाद्यदेवं तदेवं यथा सम्यक्परिच्छेदवती रोगापनयनक्रिया यन्नैवं तन्नैवं यथोन्मत्तप्रयुक्तक्रिया । नेतरेषां तीर्थानि अभिप्रेतफलानि, सम्यगनर्थविकलत्वात्, विफलक्रियावत्, यथा भिषक्प्रतिचारकातुरौषधाद्यन्यत- 25

माङ्गविकला क्रिया न सम्पूर्णाभिप्रेतफलसाधनभूता तथैतदन्यतीर्थान्यपीति । तीर्थेषु भवन्तीति, तत्त्वार्थभाष्यानुसारेणेदम्, भगवत्यान्तु पुलाकबकुशप्रतिसेवनाकुशीलास्तीर्थे एव, कषायकुशीलनिर्ग्रन्थस्नातकास्तु तीर्थे वाऽतीर्थे वा भवन्ति, कषायकुशीलः छद्मस्थावस्थायां तीर्थकरोऽपि स्यात्तदपेक्षया, तीर्थव्यवच्छेदे तदन्योऽप्यसौ स्यादिति तदन्यापेक्षया
5 चातीर्थेऽपि स्यादिति ॥

लिङ्गद्वारमाह—

**ज्ञानदर्शनचारित्ररूपभावलिङ्गानि सर्वेषां स्युः, रजोहरणादिद्रव्यलिङ्गानि तु केषाञ्चित्सर्वदैव भवन्ति, केषाञ्चित्कदाचित्, केषाञ्चिच्च नैव भवन्ति ॥**

10 ज्ञानेति । लिङ्गं द्विधा, द्रव्यभावभेदात्, भावलिङ्गं ज्ञानादि, एतच्च स्वलिङ्गमेव, ज्ञानादिभावस्याऽर्हतामेव भावात्, द्रव्यलिङ्गन्तु स्वलिङ्गपरलिङ्गभेदाद्द्वेधा, रजोहरणादि स्वलिङ्गम्, परलिङ्गमपि कुतीर्थिकगृहस्थलिङ्गभेदाद्द्विविधम्, तत्र भावलिङ्गस्य तदन्तरा चरणासम्भवात्सर्वेषामस्तित्वमेवेत्याह ज्ञानेति, द्रव्यलिङ्गमाश्रित्याह रजोहरणादीति, चरणपरिणामस्य द्रव्यलिङ्गानपेक्षत्वात्त्रिविधलिङ्गेऽप्येते भवन्तीति भावः । नैव भवन्तीति, यथा
15 मरुदेवीप्रभृतीनामिति ॥

लेश्याद्वारमाह—

**पुलाकस्योत्तरास्तिस्रो लेश्याः, बकुशप्रतिसेवनाकुशीलयोष्षडपि, परिहारविशुद्धिस्थकषायकुशीलस्योत्तरास्तिस्रः, सूक्ष्मसम्परायस्थस्य तस्य निर्ग्रन्थस्नातकयोश्च केवला शुक्ला लेश्या, अयोगस्य शैलेशीप्रतिपन्नस्य**
20 **न काचिदपि भवति ॥**

पुलाकस्येति । लेश्याः पूर्वोक्ताः, उत्तरा इति, भावलेश्यापेक्षया तेजःपद्मशुक्ललेश्यास्तिस्र इत्यर्थः । बकुशेति, षडपीति, तत्त्वार्थभाष्यानुसारेणेदम्, भगवत्यान्तु पुलाकस्येवेत्युक्तम् । परिहारविशुद्धिस्थेति, तिस्र इति तेजःपद्मशुक्ललेश्या इत्यर्थः, तत्त्वार्थानुसारेणेदम्, भगवत्यान्तु कषायकुशीलस्तु षट्स्वपीत्युक्तम्, तद्व्याख्यायां सकषायमेवाश्रित्य " पुव्वपडि-
25 वण्णओ पुण अण्णयरीए लेस्साए " इत्येतदुक्तमिति संभाव्यत इति दृश्यते । तस्येति कषायकुशीलस्येत्यर्थः । केवलेति, अन्यलेश्यानिरपेक्षेत्यर्थः । स्नातकस्य परमशुक्ललेश्या प्रोक्ता भगवत्यां, परमशुक्ललेश्या च शुक्लध्यानतृतीयभेदावसरे या लेश्या सा, अन्यदा तु शुक्लैव, सापीतरजीवशुक्ललेश्यापेक्षया स्नातकस्य परमशुक्लेति । शिष्टं स्पष्टम् ॥

उपपातद्वारमाह—

**पुलाकस्योपपात आसहस्रारं, बकुशप्रतिसेवनाकुशीलयोर्द्वादशदेवलोके। कषायकुशीलनिर्ग्रन्थयोस्तु सर्वार्थसिद्धे। सर्वेषामपि जघन्यः पल्योपमपृथक्त्वस्थितिके सौधर्मे। स्नातकस्य निर्वाणे॥**

पुलाकस्येति। उपपातः पूर्वजन्मपरित्यागेन स्थानान्तरप्राप्तिः। आसहस्रारमिति, 5
उत्कर्षेणेदम्। बकुशप्रतिसेवनाकुशीलयोरिति, द्वादशदेवलोक इति, अच्युत इत्यर्थः।
सर्वार्थसिद्ध इति, निर्ग्रन्थस्याजघन्योत्कृष्टत्वं बोध्यम्। सर्वेषामपीति, जघन्ययोग्यानां सर्वेषामित्यर्थः, तथा च पुलाकबकुशकुशीलानां जघन्येन सौधर्मे कल्पे उपपात इति भावः,
पल्योपमपृथक्त्वस्थितिक इति, पल्योपमस्य द्विप्रभृत्यानवभ्यः पृथक्त्वपरिभाषणात्
तावत्स्थितिक इत्यर्थः। उत्कर्षेण तु पुलाकस्य तत्राष्टादशसागरोपमा स्थितिर्बकुशस्य द्वाविं- 10
शतिसागरोपमस्थितिः। एवं प्रतिसेवनाकुशीलस्यापि, कषायकुशीलस्य तु त्रयस्त्रिंशत्सागरोपमा स्थितिस्स्वस्वोत्कृष्टलोकेष्विति ज्ञेयम्॥

स्थानद्वारमाह—

**पुलाककषायकुशीलयोर्लब्धिस्थानानि सर्वजघन्यानि। तौ युगपदसंख्येयानि स्थानानि गच्छतः। ततः पुलाको व्युच्छिद्यते। कषायकुशीलस्तु गच्छ- 15
त्यसंख्येयस्थानान्येककः। ततः कषायकुशीलप्रतिसेवनाकुशीलबकुशा युगपदसंख्येयानि संयमस्थानानि गच्छन्ति, ततो बकुशो व्युच्छिद्यते ततोऽसंख्येयस्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते ततोऽसंख्येयस्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते, अत ऊर्ध्वमकषायस्थानानि निर्ग्रन्थः प्रतिपद्यते। सोऽप्यसंख्येयस्थानानि गत्वा व्युच्छिद्यते, अत 20
ऊर्ध्वमकषायस्थानानि निर्ग्रन्थः प्रतिपद्यते। सोऽप्यसंख्येयस्थानानि गत्वा व्युच्छिद्यते, अत ऊर्ध्वस्थानं गत्वा स्नातको निर्वाणं प्राप्नोतीति दिक्॥ इति पुलाकादिनिरूपणम्॥**

पुलाकेति। पुलाको बकुशप्रतिसेवनाकुशीलापेक्षया तथाविधविशुद्ध्यभावेन हीन एव
स्यात्, कषायकुशीलापेक्षया हीनो वा स्यात्, अविशुद्धसंयमस्थानवृत्तित्वात्, तुल्यो वा 25
समानसंयमस्थानवृत्तित्वात्, अधिको वा स्याच्छुद्धतरसंयमस्थानवृत्तित्वात्, यतः पुलाकस्य
कषायकुशीलस्य च सर्वजघन्यानि संयमस्थानान्यध इति भावः। युगपदसंख्येयानीति,
तुल्याध्यवसायत्वादिति भावः। व्युच्छिद्यत इति हीनपरिणामत्वादिति भावः। तु शब्देन

पुलाके व्युच्छिन्नेऽपीति गम्यते । एकक इति, शुभतरपरिणामत्वादिति भावः, निर्वाणमिति, मोक्षं कृत्स्नकर्मक्षयरूपमित्यर्थः, निखिलनयाभिप्रेतार्थत्वात् , जैनदर्शने च षड्दर्शनसमूहमयत्वस्य सम्मतत्वात्, तथाहि ऋजुसूत्रादिभिर्नयैः ज्ञानसुखादिपरम्परा मुक्तिरिष्यते, तैरुत्तरोत्तरविशुद्धपर्यायमात्राभ्युपगमात्, क्षणविद्यमानत्वेन ज्ञानादीनां क्षणरूपतायास्सिद्धेः क्षणविद्यमानत्वस्य क्षणतादात्म्यनियतत्वात् , क्षणस्वरूपे तथादर्शनात् । सङ्ग्रहेण त्वावरणोच्छित्त्या व्यङ्ग्यं सुखं मुक्तिरित्यभ्युपगम्यते, व्यवहारेण प्रयत्नसाध्यः कर्मणां क्षयो मुक्तिरिष्यते, दुःखहेतुनाशोपायेच्छाविषयत्वेन परमपुरुषार्थत्वात् ज्ञानादिषु दुःखोपायनाशहेतुषु प्रवृत्तिर्जायत एवेति । अन्तेऽस्य ग्रन्थस्य निर्वाणपदनिर्देशेन पर्यन्तमङ्गलमपि शिष्यप्रशिष्यपरम्परया ग्रन्थस्यास्याविच्छेदफलकं निबद्धमिति सूचितम् । ग्रन्थेऽस्मिन् सर्वे विषया न पूर्णतया दर्शिताः, अपि तु लेशत एवेत्याशयेनाह दिगिति । पुलकादिचारित्रिनिरूपणं निगमयतीतीति ॥

सम्यक्चरणनिरूपणमपि निगमयति—

**जिज्ञासूनां यथाशास्त्रं सम्यक्चरणमीरितम् ।**
**स्वरूपेण विधानेन सम्यग्ज्ञानाभिवृद्धये ॥**

जिज्ञासूनामिति । जैनतत्त्वज्ञानाभिलाषिणामित्यर्थः, यथाशास्त्रमिति, शास्त्रमर्यादामनुल्लङ्घ्येत्यर्थः, सम्यक्चरणमीरितमिति, चर्यते मुमुक्षुभिरासेव्यत इति चरणं यद्वा चर्यते प्राप्यते परं पारं भवोदधेरनेनेति चरणं व्रतश्रमणधर्मादिरूपं, सम्यगविपरीतं मोक्षसिद्धिं प्रतीत्यानुगुणं यच्चरणं तदीरितं कथितमित्यर्थः, कथमित्यत्राह स्वरूपेण विधानेनेति, लक्षणेन प्रभेदेन चेत्यर्थः, किमर्थमित्यत्राह सम्यग्ज्ञानाभिवृद्धय इति, श्रोतृणां स्वस्य च सम्यग्ज्ञानस्य विवृद्ध्यर्थमित्यर्थः ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायां पुलाकादिनिरूपणं नाम तृतीयः किरणः ॥

**पूर्वर्षिकृतशास्त्राणां सारमादाय केवलम् ।**
**रचितेयं मया टीका मूलस्येव विभाव्यताम् ॥**

**तृतीयो भागः समाप्तः ॥**

**समाप्तश्च व्याख्यासहितस्तत्त्वन्यायविभाकरः ॥ इति शिवमस्तु ॥**

मुनिश्री भद्रंकरविजयजीविरचितो ग्रन्थप्रशस्तिरूपः

# ग्रन्थकारपरम्परापरिचयः ॥

शक्रश्रेणीमुकुटमणिभिः स्पृष्टपादारविन्दः,
स्याद्वादीशश्चरमजिनपो वर्धमानः श्रियोढः । 5
ज्ञानानन्त्यो यतिततिलतापूर्वबीजं विरागः,
भूयाद्भूत्यै सुकृतिकृतिनां शासनाधीश्वरोऽसौ ॥ १ ॥
तत्पट्टाभ्रे हिमरुगिव यो भासते कान्तकान्तिः,
विद्याम्भोधिः प्रथितगणभृत्पञ्चमः संयताक्षः ।
प्रातर्ध्येयस्त्रिदिवपतिवत्सत्सुधर्माश्रितः सः, 10
हर्षाय स्तात्सहृदयहृदां श्रीसुधर्मेशिता वै ॥ २ ॥
जम्बूः कम्बूज्ज्वलतरयशास्तत्सुपट्टाब्जपूषा,
नव्योढाभिर्जितसुभगतास्वर्गरम्भोर्वशीभिः ।
जह्रे स्त्रीभिः सुदृढमनसो यस्य यूनो मनो नो,
वात्याभिर्वो वितरतु यथा मेरुकूटं स सौख्यम् ॥ ३ ॥ 15
तत्पट्टप्राक्शिखरिरवयः श्रीलजम्बूपदेशाद्,
दीक्षां प्राप्ताः प्रभवविभवो येऽभवन्पान्तु ते वः ।
अर्हन्मूर्त्या कुमततिमिरं सूर्यदीप्त्येव नष्टं,
तत्पट्टेशोऽवतु सुमनसो यस्य शय्यम्भवः सः ॥ ४ ॥
ततो यशोभद्रगुरुर्बभूव, तत्पट्टशुद्धाम्बरपुष्पदन्तौ । 20
सम्भूतविद्वन्मणिभद्रबाहू, उभावभूतां कुमताञ्जराहू ॥ ५ ॥
वेश्यावेश्मन्युषित्वा त्रिभुवनविजयी येन कामो विजिग्ये,
कोशावेश्याकटाक्षप्रसृमरविशिखानिर्जितस्वान्तयोधः ।
कीर्तिः प्रातस्त्रिलोक्यां नरसुरदनुजैः कीर्त्यते यस्य नित्यं,
भद्रं स स्थूलभद्रो दिशतु मतिमतां पट्टरत्नं तयोर्यः ॥ ६ ॥ 25

श्रीमन्महागिरिसुहस्तिगुरू अभूतां, तत्पट्टभालतिलकौ च सुहस्तिशिष्यौ ।
श्रीसुस्थितो विबुधसुप्रतिबुद्ध एतौ, जातौ च कौटिकगणः समभूत्ततोऽसौ ॥७॥

क्रियास्वखिन्नोऽभवदिन्द्रदिन्नः, ततोऽभवच्च प्रतिदिन्नसूरिः ।
गम्भीरवक्षा गिरिवत्सुधीरः, ततोऽभवत्सिंहगिरिः सुवीरः ॥ ८ ॥

5 वज्रस्वामी वृजिनशिखरिध्वंसवज्रोपमानः,
बाल्येऽपाठीन्मतिसुरगुरुर्योऽखिलैकादशाङ्गीम् ।
विद्याधीशः समजनि यतो वज्रशाखा प्रभाढ्या,
विश्वं पायाद्भववनदवात्सैष तत्पट्टराजः ॥ ९ ॥

श्रीवज्रसेनो विजिताक्षसेनः, तत्पट्टपूर्वाद्रिरविर्बभूव ।
10 तत्पट्टरत्नो गुरुचंद्रसूरिः, ततोऽभवच्चान्द्रकुलस्य मूलम् ॥ १० ॥

सामन्तभद्रः कृतभव्यभद्रः, ततोऽजनि स्वागमपारदृश्वा ।
विद्याक्रियासत्त्वकृपासमुद्रः, निरस्ततन्द्रो नतभूरिसूरिः ॥ ११ ॥

श्रीवृद्धदेवोऽजनि सूरिवर्यः, तत्पट्टपूर्वाचलचित्रभानुः ।
साधुक्रियाकर्मठताप्रतीतः, ज्ञानप्रमोदप्रतिपूर्णचेताः ॥ १२ ॥

15 श्रीप्रद्योतनसूरिराट् समभवत् तत्पट्टपुण्ड्रायितो,
देवीभिर्विजयादिभिश्चतसृभिः संसेव्यपादद्वयः ।
यः शान्तिस्तवगुम्फतः समहरन्मारिं दयामेदुरः,
तत्पट्टाभरणं सुखं दिशतु वः श्रीमानदेवः कृती ॥ १३ ॥

अर्द्धैतप्रतिमानतुङ्गविबुधः सिद्धान्तपारङ्गतः,
20 श्रीभक्तामरकाव्यचारुरचनाचातुर्यचञ्चुः सुचित् ।
तत्पट्टामलहारनायकमणि-स्तन्याद्रमां धीमतां,
विद्यावित्तमहीप्रतीतमहिमाऽर्हच्छासनाऽर्यमा ॥ १४ ॥

यो नागपूर्यां नमिनाथबिम्बं, प्रातिष्ठिपत्स्फारमहत्त्वपूर्णम् ।
श्रीवीरसूरिः समभूत्ततः सः, तत्पट्टशेषोरगवासुदेवः ॥ १५ ॥

25 तत्पट्टे जयदेवसूरिरभव-च्चारित्रपावित्र्यभृद्,
देवानन्दगुरुस्ततः समजनि त्राता पतत्प्राणिनाम् ।

विद्वान् विक्रम[24]सूरिराड् गणपतिर्निर्ग्रन्थ आसीत्ततः,
योगिश्रीनरसिंह[25]सूरिवृषभो जज्ञेऽथ विज्ञेश्वरः ॥ १६ ॥

श्रीनागह्रदतीर्थरक्षणकृते नग्नाटजेता क्षणात्,
तत्पट्टेशसमुद्र[26]सूरिनृपतिः सञ्जाततत्त्वोऽभवत् ।
सञ्जातो हरिभद्रसूरिसवयाः श्रीमानदेव[27]स्ततः, 5
आसीच्छ्रीविबुध[28]प्रभो यतिपतिः प्राज्ञप्रकाण्डस्ततः ॥ १७ ॥

भव्यानन्ददसूरितल्लजजयानन्द[29]स्ततो जातवान्,
भक्ताम्भोजरवी रविप्रभ[30]गुरुः संख्यावतामग्रणीः ।
सूरीशोऽजनि शुद्धकीर्तिकयशोदेवो[31] बभूवाँस्ततः,
प्रद्युम्नस्मयहृत्ततः समजनि प्रद्युम्नसूरीश्वरः[32] ॥ १८ ॥ 10

येनाकार्युपधानवाच्यरुचिरग्रन्थो मुदे ज्ञानिनां,
उत्पेदे स ततस्तपोधनवरः श्रीमानदेवः[33] प्रभुः ।
जज्ञे श्रीविमलादिचन्द्र[34]सुगुरुः सत्स्वर्णसिद्धिस्ततः,
जेता गोपगिरीशकोविदमणेर्वादाङ्गणे शास्त्रवित् ॥ १९ ॥

वेदाङ्काङ्कमिते समं सुमनुजैः श्रीवैक्रमाब्दे गते, 15
श्रीलोद्योतन[35]सूरिराट् प्रविहरन् पूर्वावनीतः सुधीः ।
आगात्सोऽर्बुदमुख्यशैलसविधे टेलीवटद्रोरधः,
लग्नेऽच्छे स्वपदेऽष्टसूरिवृषभान् प्रातिष्ठिपत्पावनः ॥ २० ॥

सन्मौक्तिकाच्छो वटसंज्ञगच्छः, ततो जगत्यां सुगुणैकगुच्छः ।
अपप्रथद्व्याप्ततमोऽपहारी, यथाऽन्तरिक्षे सवितुः प्रकाशः ॥ २१ ॥ 20

श्रीसर्वदेवो[36] नतसर्वदेवः, प्रशस्यशिष्यैः कृतपादसेवः ।
प्रख्यातकीर्तिः प्रथमोऽत्र सूरिः, जज्ञेऽथ तत्पट्टसरःसरोजम् ॥ २२ ॥

रूपश्रीविरुदं प्रजेशसविधात्प्राप्तं स्ववैदुष्यतः,
येन श्रीयुतदेव[37]सूरिनृपतिर्जातः स विज्ञस्ततः ।
तत्पट्टेऽजनि सूरिशेखरवरः श्रीसर्वदेवः[38] पुनः, 25
सद्विद्याललनाविलाससदनं चारित्रिचूडामणिः ॥ २३ ॥

ततो यशोभद्र[३९]कनेमिचन्द्रौ तत्पट्टभद्रासनमुख्यराजौ ।
जातौ मुनी संयमशौर्यभाजौ, द्वौ कोविदौ सूरिवरौ सतीर्थ्यौ ॥ २४ ॥

अत्यनीद् यो विकृतीः समग्राः, अपात्सदा काञ्जिकनीरमेकम् ।
सोऽभूत्ततः श्रीमुनिचन्द्र[४०]सूरिः तत्पट्टशाली शमवीचिमाली ॥ २५ ॥

5 आचार्यवर्याजित[४१]देववादि-श्रीदेवसूरिप्रमुखा अभूवन् ।
प्राज्ञा विनेया विनयप्रशस्याः, शिष्येषु धुर्या मुनिचन्द्रसूरेः ॥ २६ ॥

तत्रादिमाच्छ्रीजयसिंह[४२]सूरिः, कुशाग्रबुद्ध्या जितदेवसूरिः ।
जज्ञे मुनीशः कविचक्रवर्ती, दिगन्तरालप्रथितातिकीर्तिः ॥ २७ ॥

सोमप्रभाचार्यवरः शतार्थी, पूर्वो द्वितीयो मणिरत्न[४३]सूरिः ।
10 उभौ च तस्याभवतां विनेयौ, प्रतीक्ष्यपादौ जितवादिवादौ ॥ २८ ॥

सानुग्रहप्रचरणप्रथितोदयो यः, स्वःसानुमानिव बभौ मणिरत्नपट्टे ।
चारित्ररत्नखनिमान् गुणधातुपूर्णः, कल्याणराजिजटिलः सुरसेव्यपादः ॥ २९ ॥

श्रीमज्जगच्चन्द्र[४४]मुनीन्द्रमुख्यः, तत्त्वज्ञराट् चान्द्रकुलाब्धिचन्द्रः ।
चन्द्रातिसौम्याकृतिकस्तपस्वी, स सूरिवर्यस्तनुताच्छिवं वः ॥ ३० ॥

15 सुदुस्तपा धीरवरेण याव-ज्जीवं मुदा येन तपस्विना सः ।
आचाम्लरम्या विदधे तपस्या, प्रशंसनीयो न कथं सुधीभिः ॥ ३१ ॥

यो द्वादशाब्दे विगते सुराज्ञः, श्रीराणकात्सत्तमजैत्रसिंहात् ।
आघाटसंज्ञे नगरेऽभिरामे, प्रापत्सुरम्यं बिरुदं तपेति ॥ ३२ ॥

बाणाष्टवक्षोरुहचन्द्रसङ्ख्ये, वर्षे सुधान्यादिकसन्निकर्षे ।
20 विस्तीर्णतेजा भुवि पप्रथेऽयं, तपेति गच्छः सुखदस्ततोऽच्छः ॥३३॥

सदालिजुष्टः सुमनोऽतिरम्यः, फलेग्रहिः शिष्यलतावितानः ।
पर्वाधिशाली सुरगच्छवत्सः, तपेति गच्छः स्म चकास्ति नित्यम् ॥३४॥

अनन्यसाधारणचित्रचरित्रः, शैथिल्यमुक्तश्चरणप्रवृत्तौ ।
यस्य द्वितीया वटगच्छसंज्ञा, बिभर्ति केषां न स पूज्यभावम् ॥ ३५ ॥

25 स्फारस्फुरत्संवरवीचिराजि-र्मर्यादितो भव्यरमानिमित्तम् ।
अस्ताघमूलो मुनिरत्नपूर्णः, श्रमत्प्रभात्सागरवत्स गच्छः ॥ ३६ ॥

देवेन्द्रसूरिविजयादिमचन्द्रसूरी, शिष्योत्तमौ कुमतसन्तमसांशुमन्तौ ।
विद्याविशारदवरौ श्रमणौ समास्तां, तत्पङ्कनाकवडवातनयौ मुनीन्द्रौ ॥ ३७ ॥

विद्यानन्दगणिर्विचक्षणमणिर्देवेन्द्रसूरीशितुः,
पूर्वोऽन्यो मुनिधर्मघोषगणपो ह्येतौ विनेयावुभौ ।
सेनान्यौ जिनशासनक्षितिपतेः पुण्याङ्गिबाहूपमौ,
जातो तत्पदमौलिमौलिमणिभृत्–श्रीधर्मघोषः क्षमी ॥ ३८ ॥

समुद्राधिष्ठाता जलनिधितरङ्गावलिमिषात्,
ढुढौके रत्नादीननिमिषवरो यस्य सविधे ।
स्वपक्षान्यस्त्रीभिः प्रवचनवचोभञ्जनकृते,
गले केशव्यूहः कुमतिभिरकारि स्वबलतः ॥ ३९ ॥

तदा विद्याद्रङ्गे विदितकपटो यो मुनिवरो,
भृशं तस्तम्भैतास्तदनु सदयः सङ्घवचनात् ।
वधूनां निर्बन्धाल्लघु सममुचच्चातिशयभृत्,
समग्रन्थीच्छ्रव्या जयवृषभसंज्ञादिकचिताः ॥ ४० ॥

भिषज्यते कर्मरुजापहारे, सम्राज्यते सूरिसमूहमध्ये ।
धर्मोपदेशे जलमुच्यते यः, ओजायते पण्डितमण्डलेषु ॥ ४१ ॥

कश्चिद्योगिशठोऽवसद्वरनरे द्रङ्गे विशालाभिधे,
साधून्मापयते स्म सौवबलतो जैनान्समभ्यागतान् ।
भूम्यां संविहरन्हरन्कलितमः कुर्वञ्जनस्योद्धृतिं,
श्रीसूरीश्वरधर्मघोषविबुधस्तत्राजगामैकदा ॥ ४२ ॥

ईर्ष्याज्वालाज्वलितहृदयोऽहङ्कृतिध्वस्तबुद्धिः,
ज्ञात्वा योगी प्रति मुनिवरान् भापनायाददर्शत् ।
भीष्मान्दन्तान्क्रकचविषमान्दर्शयित्वा कफोणिं,
जग्मुर्भीताः स्वगुरुसविधे साधवः प्रोचुराशु ॥ ४३ ॥

प्रावोचद्गुरुराट् मुनींस्ततदयो मा भैष्ट यूयं मनाग्,
युष्मद्रक्षणदक्षशक्तिसमितो वेवेद्मि यावत्तदा ।

श्रुत्वा भीतिकरान्बहिश्च वसतेर्हीकुन्दुराहिस्वरान्,
नानोपद्रवभीतसाधुनिकरो द्राकान्दिशीकोऽभवत् ॥ ४४ ॥

ज्ञात्वा यावदिमां प्रवृत्तिमृषिराट्–श्रीधर्मघोषो गुरुः,
प्राकूसज्जीकृतकुम्भके निजकरं दत्त्वा पटाच्छादिते ।
निर्भीकः प्रजजाप तावदुदिता सर्वाङ्गबाभिव्यथा,
धूर्ते योगिनि सेवकानथ तदा योगी जगाद प्रिये ॥ ४५ ॥

योगी स्त्रीयं विलसितमिदं व्याकुलो द्रागहार्षीत्,
गत्वाऽऽक्रन्दन् श्रमणवसतौ वक्त्रदत्ताङ्गुलिः सः ।
भ्रान्त्याऽवोचद् यदिह विहितं क्षम्यतां सर्वमेतत्,
कुर्वे मातः प्रति मुनिवरान् क्लेशकृन्नीचकृत्यम् ॥ ४६ ॥

लीनं व्यधात्तं गुरुधर्मघोषः, स्वकीयपादाम्बुजयोस्तदानीम्,
ततः प्रवृद्धिर्जिनशासनस्य, कामं बभूवाघविनाशनस्य ॥ ४७ ॥

यत्राखिलादिप्रवरस्तुतीर्थः, प्राऽऽदिमत्काव्यकलाविदग्धः ।
सोमप्रभाचार्यवरो बभूवान्, तत्पादसेवानलिनीद्विरेफः ॥ ४८ ॥

आसीत्सूरिवरेण्यसोमतिलकस्तत्पट्टलक्ष्मीधरः,
सत्संवेगतरङ्गसङ्गविशदीभूतक्रियाज्ञानभृत् ।
यस्याद्यो गणिचन्द्रशेखरतपस्व्यन्यो जयानन्दकः,
प्रान्त्यः श्रीगुरुदेवसुन्दरवरः शिष्यत्रयी प्राजनि ॥ ४९ ॥

श्रीसूरीश्वरदेवसुन्दरशमी प्राभ्यस्तयोगोऽभवत्,
सम्प्राप्ताखिलमन्त्रतन्त्रविभवः तत्पट्टरोचिष्पतिः ।
नृव्यालानलसर्वसाध्वसहरो नैमित्तिकेष्वग्रणीः,
हर्ता स्थावरजङ्गमाखिलविषस्याचर्यो नृपामात्यकैः ॥ ५० ॥

यः पञ्चभिः पण्डितशिष्यमुख्यैः, शिलीमुखैः काम इव व्यभात्तैः ।
ज्ञानादिमः सागरसूरिराद्यः, आसीत्कृतावश्यककावचूरिः ॥ ५१ ॥

विश्वश्रीधरपुस्तकादिरचना–सौन्दर्यनैपुण्यभाग्,
सूरिश्रीकुलमण्डनाह्वगुरुराट् जज्ञे द्वितीयस्ततः ।

आसीच्छ्रीगुणरत्नसूरिसुगणो वैराग्यरङ्गाश्रितः,
श्रीवैयाकरणाग्रणीर्गणिगणे वर्यस्तृतीयस्ततः ॥ ५२ ॥

आचार्याग्रिमसोमसुन्दरगणिर्जातश्चतुर्थस्ततः,
दृष्ट्वा केचन निन्दका मुनिपतेर्यस्य क्रियापात्रताम् ।
तद्घाताय सहस्रमानवगणं पाखण्डिनो मानुषाः,
प्रेषुः श्रीगुरवश्च यत्र शयितास्तत्रागतोऽयं गणः ॥ ५३ ॥ 5

रात्रौ चन्द्रमसः प्रकाशपतने धर्मध्वजेनादितः,
पार्श्वं सद्विधिना प्रमार्ज्य गुरुराट् प्रोद्वर्तयन्वीक्षितः ।
तेनोचे लघुजन्तुरक्षणकरो वध्यः कथं पापकै-
रस्माभिः खलु निन्द्यवृत्तिनिपुणैः कारुण्यवाराम्निधिः ॥ ५४ ॥ 10

ततो गणोऽयं गुरुपादनम्रः, अस्मान्क्षमस्वेति जगाद सूरिम् ।
गतो गणः स स्वगृहं क्षमित्वा, तत्र प्रभावः प्रससार सूरेः ॥ ५५ ॥

श्रीसाधुरत्नगणपोऽजनि पञ्चमोऽत्र, श्रीसोमसुन्दरगणिः समसाधुमध्ये ।
कल्याणिकाभिधसुकाव्यविधानदक्षः, तत्पट्टशेषभुजगाग्रमणिर्बभूव ॥ ५६ ॥

सिंहासनाशोकसरोवरार्ध-भ्रमाब्जभेरीमुरजादिनव्यैः । 15
त्रिंशत्सुबन्धै रमणीयमार्गां, चित्राक्षरद्व्यक्षरपञ्चवर्गाम् ॥ ५७ ॥

तां त्रिदशतरङ्गिणी-नामधेयां सुपत्रिकाम् ।
योऽष्टोत्तरशतैर्हस्तै-र्दीर्घां प्रैपीद्गुरुं प्रति ॥ ५८ ॥ युग्मम् ॥

प्रापद्बालसरस्वतीति बिरुदं यो दक्षिणे राष्ट्रके,
बाल्ये श्लोकसहस्रकं नवनवं कण्ठे चकारानिशम् । 20
स्तोत्रं संतिकरं नृणां सुखकरं प्रादीदमत्सुन्दरं,
आसीच्छ्रीमुनिसुन्दराभिधगुरुस्तत्पट्टधौरेयकः ॥ ५९ ॥

श्रीरत्नशेखरविशारदवर्यधुर्यः, सूरीशशेखरसमो नयभङ्गविज्ञः ।
श्राद्धप्रतिक्रमणसूत्रसुवृत्तिकर्ता, तत्पट्टशेखरवरः समभूत्ततोऽसौ ॥ ६० ॥

श्रीलक्ष्मीसागरः सूरिर्जज्ञे तत्पट्टमण्डनः । 25
अभून्श्रीसुमतिः साधुः तत्पट्टाब्धिविधूपमः ॥ ६१ ॥

दाक्षिण्यदाक्ष्यमुनितादिगुणालिपुष्टाः, तत्पट्टचैत्यशिखराग्रसुवर्णकुम्भाः ।
ये जैनशासननभःकिरणेशितारः, दीक्षां ददुर्हरगिरिप्रमुखार्विनणाम् ॥६२॥

स्वाचारमार्गं मुमुचुर्न धन्याः, ये ते वसन्तः श्लथसाधुमध्ये ।
गच्छप्रभूतप्रभुताविशिष्टाः, हेमादिमाः श्रीविमला अभूवन् ॥६३॥युग्मम्॥

5 आनन्दसूरिर्विमलान्तिमोऽभूत्, तत्पट्टदीव्यन्मणिहारनाथः ।
समुद्धरन् साधुपथं श्लथं यः, तपस्विनिर्ग्रन्थसमाजराजः ॥ ६४ ॥

प्रभावयञ्जैनमिदं सुशासनं, समर्थयन्नागमतत्त्वगूढताम् ।
प्रचारयन्देशनया स्वधर्मकं, प्रवर्धयन्विश्वतले यशोलताम् ॥ ६५ ॥

तत्पट्टभद्रासनराजतेजाः, आप्तोक्तिवेत्ता जयिदानसूरिः ।
10 हतप्रमादो जितवादिवादो, महाप्रतापी समभून्मुनीन्द्रः ॥६६॥ युग्मम् ॥

वैराग्यरत्नप्रभवावनीभृद्, वैदग्ध्यचूतस्य वसन्तमासः ।
सौभाग्यसौजन्यविहारभूमिः, क्रियाङ्गनाक्रीडनकान्तकुञ्जः ॥ ६७ ॥

तत्पट्टपद्माकरराजहंसः, कुपाक्षिकाज्ञानतमिस्रहंसः ।
15 कारुण्यसिन्धुः शमराजसौधः, श्रीहीरसूरिर्नतसूरिरासीत् ॥ ६८ ॥

स्याद्वादसिद्धान्तमबाध्यमेनं, प्रमाणयन्युक्तिततिप्रयुक्तम् ।
समन्वयन्भिन्नमतानि विद्वान्, स्वकीयसिद्धान्तसुचारुदृष्ट्या ॥ ६९ ॥

मध्येसभं भाति यदीयवाणी, पानीयवत्कर्ममलं हरन्ती ।
औदार्यगाम्भीर्यमयी सुचार्वी, माधुर्यधुर्या शुचितां वहन्ती ॥ ७० ॥

20 हिंसापराञ्श्रीमदकब्बरादीन्, नृपाननेकान्यवनेषु मुख्यान् ।
दयामयाँस्तान्विदधज्जगत्यां, व्याख्यानधाराधरधारया यः ॥ ७१ ॥

श्रीसेनसूरिप्रमुखैः स्वशिष्यैः, विद्याव्रतस्थैः समुपेयिवद्भिः ।
वज्रीव देवैः समुपास्यमानः, जगद्गुरुर्जङ्गमकल्पशाखी ॥ ७२ ॥

समागतान्वादिगजान्सुसज्जान्, वादस्थले सिंह इवाधिगर्जन् ।
25 स हीरसूरिर्जिनशासनस्य, पुस्फोर जित्वा विजयध्वजं तान् ॥ ७३ ॥

श्रीसेनसूरिः शमिसेनताभाक्, तत्पट्टचूडामणितां धरोऽभूत् ।
वादे विजेता बहवादिवृन्दम्, श्रीजैनसच्छासनदण्डनाथः ॥ ७४ ॥

रूपेण कामतुल्यो यो, वृत्त्या कामविनाशनः ।
 स जीयात्सेनसूरीशः, पादाभ्यां लोकपावनः ॥ ७५ ॥

यस्मै जहाङ्गिरनृपेण सगौरवेण, सन्मण्डपाचलचये बिरुदं प्रदत्तम् ।
दीव्यज्जहाङ्गिरमहासुतपेति सोऽभूत्, तत्पट्टहाटकघटो गणिदेवसूरिः[60] ॥७६॥

तत्पट्टधरोऽजनि सिंहसूरिः[61], दुर्वादिदन्तावलसिंहरूपः । 5
 तदन्तिषत्सत्यगणि[62]र्बभूव, क्रियाप्रियाश्लेषसुखोपभोक्ता ॥ ७७ ॥

न्यायाचार्ययशःसतीर्थ्यविनयोपाध्यायसाहाय्यतः,
 शैथिल्यं स्वगणे समीक्ष्य विदधौ कामैः क्रियोद्धारकम् ।
सत्यं नाम चकार सत्यमिति यः स्वीयं तपस्वी ततः,
 गच्छं स्वच्छममुं तपेति विदध–ज्जीयात्स सत्यश्चिरम् ॥ ७८ ॥ 10

तच्छिष्यकर्पूरगणि[63]स्ततोऽभूत्, क्रियैककर्पूरसुगन्धपूर्णः ।
 क्षमागणीशः[64] समभूत्ततः सः, तदीयशिष्ये वरतां दधानः ॥ ७९ ॥

प्रतिष्ठिता सप्तशती च येन, तीर्थङ्करस्य प्रतिमा मनोज्ञा ।
 तत्पादवासी जिननामको[65]ऽभूत्, षड्जीवरक्षाकरणप्रवीणः ॥८०॥ युग्मम् ॥

श्रीमानभूदुत्तम[66]नामधेयः, तच्छिष्यवर्यो गणिपूत्तमोऽसौ । 15
 पन्न्यासपद्मार्द्य[67]जयो गणीशः, ततोऽभवद् गौर्जरकाव्यकारी ॥ ८१ ॥

पद्मद्रहेति प्रथितोरुकीर्तिः, बर्हानपूर्यां सह ढुण्ढकैर्यः ।
 कुर्वन्विवादं विजयं तदापत्, क्रियाभिकाङ्क्षी सततं विहारी ॥ ८२ ॥

तच्छिष्य आसीद्गणिरूप[68]नामा, ततोऽभवत्कीर्तिगणि[69]ः सुकीर्तिः ।
 पन्न्यासकस्तूरगणि[70]स्ततोऽभूत्, बिभ्रत्क्रियाचिन्मृगनाभिगन्धम् ॥८३॥ 20

सप्तर्षिभिर्गणिमणि[71]ः प्रयुतो यथाश्रं, दीव्यत्तपाः सदमृतादिविनेयवर्यैः ।
 तत्पट्टमौलिमुकुटोऽप्रतिबद्धचारी, संवेगरङ्गकलितः शमितेन्द्रियोऽभूत् ॥८४॥

अद्यापि वर्वर्ति तदीयशिष्यः श्रीसिद्धिसूरिः स्वपरागमज्ञः ।
 घोरां तपस्यां तपति स्म वृद्धः, विनेयवर्यैः परिषेव्यमाणः ॥ ८५ ॥

ततोऽभवद्बुद्धिगणि[72]र्मनीषी, विलोक्य शास्त्रे प्रतिमाविधानम् । 25
 विहाय यो ढुण्ढककापथं सः, जग्राह संवेगपथं विविक्तम् ॥ ८६ ॥

चञ्चत्पञ्चनदे पराक्रमपदे राजन्यवंशेऽवशे,
रूपाम्बाजठरे गणेशभवने ग्रामे लहेराभिधे ।
व्यङ्काष्टाब्जमितेऽब्दके जनिरभूद्येषां शुभे वैक्रमे,
हिंसोच्छित्तिकृतेऽत्र भारततले सद्धर्मरक्षाकृते ॥ ८७ ॥

5 व्योमाब्जाङ्कविभावरीपतिमिते संवत्सरे वैक्रमे,
दीक्षां ढुण्ढकवर्त्मनः प्रजगृहुर्वैराग्यिका ये मुदा ।
पश्चाच्छास्त्रविलोकनाध्ययनतः टीकानिरुक्त्युक्तितः
वन्द्येति प्रतिमा जिनस्य शिवदा ज्ञातं च यैर्व्याकृतेः ॥ ८८ ॥

सत्यान्वेषणचञ्चुभिः प्रति मुनीन्प्रोक्तं तदन्यांश्च यैः,
10 केचित्सत्प्रविचार्य तन्मुनिवराः सत्यार्थसङ्ग्राहकाः ।
आबद्धास्यपटाः बुधा निरगमन् सत्यप्रचाराय वै,
शास्त्रोक्तः प्रतिमानमस्कृतिविधिः सर्वत्र तैर्घोषितः ॥ ८९ ॥

मूर्त्यर्चाप्रवणान्व्यधुर्गृहिजनान्कैवल्यकाङ्क्षावतः,
धर्मार्थं जिनभक्तये प्रतिपुरं कष्टं सहन्ते स्म ये ।
15 आजग्मुर्गुरुबुद्धिसाधुसविधे संवेगरङ्गोज्ज्वलाः,
सत्संवेगपथस्य ते प्रजगृहुर्दीक्षां तदानीं विधेः ॥ ९० ॥

अहम्मदावादमहानगर्यां, आनन्दरोमाञ्चितपूर्जनायाम् ।
आनन्दपूर्वा विजयान्निमास्ते, प्रापप्रथन्भूमितले महान्तः ॥९१॥

येभ्यः सूरिपदं ददौ प्रमदतः सम्भूय सङ्घोऽखिलः,
20 विद्वद्भ्यो रुचिरे महोत्सववरे श्रीपादलिप्ते पुरे ।
पाञ्चालोद्धृतिकारिणोऽजनिषत श्रीजैनसैद्धान्तिकाः,
न्यायाम्भोनिधिसूरिवर्यविजयानन्दाभिधानाश्च ते ॥ ९२ ॥

विद्याभृङ्गीललनसदनं शासनप्रेमकन्दः,
जैनाजैनोपकृतिविकसच्चारुकाङ्क्षामरन्दः ।
25 श्रीसूरीशश्चरणकरणव्यग्रताकर्णिकावान् ,
प्रादुर्भूतः कमलविजयैस्तत्सुपद्माम्बुजातः ॥ ९३ ॥

ईलाख्यदुर्गोपरि शान्तिचैत्यं, भवार्त्तभव्याङ्गिकृतातिशैत्यम् ।
जीर्णं समीक्ष्योद्धरति स्म रुच्यं, जिनेशभक्तः कमलाख्यसूरिः ॥ ९४ ॥

पापर्द्धिहिंसादिपरान्नरेशान्, नैकाँस्तदन्यान्पुरुषान्नृशंसान् ।
जीमूतगम्भीरवचःप्रवाहात्, प्राबोधयच्छ्रीकमलाह्वसूरिः ॥ ९५ ॥

पन्यासदानमुनिलब्धिसुधीवरेण्यौ, पट्टे स्वके कमलसूरिवरो न्यधात्तौ । 5
सङ्घाग्रहात्स्वपदयोग्यतया महर्षिः, छायापुरौ महपुरःसरतः प्रमोदात् ॥ ९६ ॥

महाव्रती भूतिततिप्रतीतः, शिवान्वितो दग्धमनोजराजः ।
श्रीलब्धिसूँरिः समभूद्गणेन्द्रः तदीयपट्टाचलराड्गिरीशः ॥ ९७ ॥

तर्के सूक्ष्मे धिषणधिषणा पोस्फुरीति प्रतीक्ष्णा,
येषां कृत्स्नागमगनयने लक्षणे दक्षशिक्षा । 10
जैनाजैनप्रवचनवचःपाटवं पूर्णताभाग्,
ज्योतिःशास्त्रे वरनिपुणता कोविदैरप्यगम्ये ॥ ९८ ॥

श्रव्यं काव्यं प्रसृमरगुणं चारुसन्दर्भगर्भं,
श्रुत्वा लोकैः कविकुलकिरीटेत्युपाधिः प्रदत्तः ।
येभ्यः पूज्यक्रमणकमला लब्धिसूरीशितारः, 15
ते पायासुर्भविककृषिकान्देशनावारिदानात् ॥ ९९ ॥

मूलत्राणप्रदेशे दुरधिगमतमे कष्टकोटिं सहित्वा,
प्राणिप्रत्राणमय्या मधुमधुरगिरा देशनागाङ्गनीरम् ।
भुञ्जानान् सन्निहत्य द्विजपशुसमजं काश्यपं हिंस्रलोकान्,
चक्रुस्तान्पाययित्वा पलघासिरहितान् लब्धिसूरीश्वरास्ते ॥ १०० ॥ 20

श्रीलब्धिसूरिर्वटपद्रपूर्यां, जित्वा मुकुन्दाश्रमवादिवर्यम् ।
वादाक्षवाटे जिनशासनेऽस्मिन्, जेतेतिकीर्तिं बिभराञ्चकार ॥ १०१ ॥

तत्त्वन्यायसुमावलीविलसितं स्याद्वादकुञ्जाश्रितं,
भङ्गीवल्लिनयागराजिजटिलं न्यायप्रकाशाख्यया ।
गुञ्जल्लक्षणभृङ्गसङ्गघटितं जात्याङ्कितं व्याख्यया, 25
तत्त्वन्यायविभाकरोपवनकं सच्छन्दलालित्यभृत् ॥ १०२ ॥

नव्यप्राच्यसुनीतिरीतिसरणिं प्रालम्ब्य विद्यावता,
पद्येनाऽरचि मालिकेन महता कारुण्यपुण्याब्धिना ।
तत्त्वाकाङ्क्षिविलासिखेलनकृते व्याख्यानवाचस्पतिः,
जीयाद्भूमितले स निर्मलयशाः श्रीलब्धिसूरीश्वरः ॥ १०३ ॥
5 ॥ युग्मम् ॥

वर्षे त्र्यङ्कनवौषधीपतिमिते तीर्थे वरे स्तम्भने,
तत्त्वन्यायविभाकरं सुललितं ग्रन्थं समारब्धवान् ।
ईलादुर्गपुरे समाप्तिमकरोत् तस्यैकसत्पद्धतेः,
सद्बुद्धार्थकमूलसूत्ररचनात् श्रीलब्धिसूरीश्वरः ॥ १०४ ॥

10 बाणाङ्काङ्कमृगाङ्कवत्सरमिते श्रीवैक्रमे तत्र वै,
व्याख्यामारभते स तस्य महतीं न्यायप्रकाशाभिधाम् ।
गुर्वर्थां फलवर्धिनामनगरे व्याख्यां समापत्सुधीः,
सप्ताङ्काङ्कसुधामरीचिशरदि श्रीलब्धिसूरीश्वरः ॥ १०५ ॥

तच्छिष्यो भुवनादिनामविजयो-पाध्यायमुख्योऽभवत्,
15 तच्छिष्येण मया प्रशस्तिशतकं भद्रङ्करेणारचि ।
योऽत्राज्ञानवशात्प्रविस्मृतिवशाद् दुष्टप्रयोगः कृतः,
तं संशोध्य विवेकहंसविदुरैर्वाच्यं हि तद्धीधनैः ॥ १०६ ॥

सटीकस्य तत्त्वन्यायविभाकरस्य

# शुद्धाशुद्धपत्रिका

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | १० | णमार्था | णामर्था |
| ७ | ६ | सुखार्थे | सुखार्थं |
| ८ | २१ | स्सामाधिक- | स्समानाधि- |
| | | रण्या | करणा |
| ८ | २३ | भेषजे | भेषजेन |
| १० | ३ | पौद्रलिकं | पौद्गलिकं |
| १० | १४ | भिलापा, सा | भिलाषः, स |
| १० | १६ | त्मिकाया | त्मकस्या- |
| | | अभिलाषाया | भिलाषस्य |
| ११ | ४ | चरितस्वे | चरितत्वे |
| १४ | ५ | जातीयस्वे | जातीयत्वे |
| १५ | ७ | अनागस्या | अनागतस्या |
| १६ | २ | परमाणवपीति | परमाणावपीति |
| १६ | १६ | तिसृणा | तिसृणा |
| १७ | २७ | ज्ञानारणी | ज्ञानावरणी |
| १८ | २६ | किया | क्रिया |
| १९ | १ | इदानी | इदानीं |
| २० | १० | पुद्रल | पुद्गल |
| २० | ११ | पुद्रल | पुद्गल |
| २२ | २४ | सिद्ध | सिद्ध |
| २४ | १० | भाविनां | भाविनः |
| २४ | १० | दीनामे | दीने |
| २४ | १० | भूयेत | भवेत् |
| २४ | १७ | नात्म्यैक्ये | नात्मैक्ये |
| २६ | १३ | षष्ठ्य | षष्ठ्य |
| २६ | २३ | षष्ठ्य | षष्ठ्य |
| २७ | १६ | त्युकूल | त्यनुकूल |
| २७ | १९ | यवस्वं | यवत्वं |
| २९ | ६ | पुद्रलो | पुद्गलो |
| २९ | ७ | निमित्तक | निमित्त |
| ३० | ९ | पुद्रला | पुद्गला |
| ३० | १२ | पुद्रल | पुद्गल |
| ३० | २२ | पुद्रला | पुद्गला |
| ३० | २३ | पुद्रला | पुद्गला |
| ३० | २७ | निर्वत्तन | निर्वर्त्तन |
| ३० | २८ | चक्षुश्रोत्राणां | चक्षुरश्रोत्राणां |
| ३१ | १३ | पुद्रलोयच | पुद्गलोपच |
| ३१ | १६ | क्षायौप | क्षायोप |
| ३२ | १ | पुद्रला | पुद्गला |
| ३२ | १० | स्तस्तः | स्ततः |
| ३३ | २२ | च्छेद्य | छेद्य |
| ३४ | ४ | रसन | रसने |
| ३९ | १७ | प्रदेशा येषान्ते | प्रदेशा |
| ३९ | १९ | निरवयत्वेन | निरवयवत्वेन |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ४३ | १९ | निवृत्तौ | निर्वृत्तौ | ९८ | ११ | लाषा | लाषो |
| ४४ | ७ | द्यत्वे | द्यत्वेन | ९८ | १८ | लाषावत् | लाषवत् |
| ४८ | २ | द्भेद: | द्भिन्नं | ९८ | १८ | लाषा | लाष: |
| ४८ | ६ | घेयस्वा | घेयत्वा | ९८ | २५ | लाषावत् | लाषवत् |
| ४८ | २६ | तद्याह | तमाह | ९८ | २५ | लाषा | लाष: |
| ५१ | १९ | स्याश्रित्य-मनित्यश्च | स्याश्रित्योऽनित्यश्च | १०० | १० | रसन | रसने |
| | | | | १०३ | १२ | विधा | विधा: |
| ५३ | १८ | मपराणां | मपरेषां | १०३ | २१ | निवृत्त | निर्वृत्त |
| ५९ | २ | पर्यार्या | पर्याया | १०३ | २६ | लाषा | लाष: |
| ६० | ८ | पूर्व्या | पूर्व्या: | १०४ | १० | मुदिष्ट | मुद्दिष्ट |
| ६० | २४ | प्रवृति | प्रवृत्ति | १०८ | १६ | प्रभा | प्रधा |
| ६१ | १५ | जघन्य | जघन्या | ११० | २२ | परिग्रह | परिग्रह |
| ६५ | २१ | मित्यार्थः | मित्यर्थः | ११३ | २३ | क्रियेत्यर्थ: | क्रियेत्यर्थ: |
| ७१ | ६ | प्रयोजक | प्रयोजकं | ११५ | १५ | विशेष | विशेषण |
| ७१ | ७ | लक्षणार्थ | लक्षणार्थ: | १२५ | ७ | भेद | भेदं |
| ७१ | २२ | तेन प्रत्येकं | तेन | १२८ | ५ | प्रविष्टस्य | प्रविष्ट: |
| ७४ | २६ | युषं यदा | युर्यदा | १३५ | २४ | वस्तु | वास्तु |
| ७५ | २ | युषं बध्नाति | युर्बध्नाति | १३६ | १८ | विध्याना | विध्यापना |
| ७५ | २० | चक्रधरत्वादी | चक्रधरादी | १३७ | १ | प्रतिनियतदिवसा | प्रतिदिवसा |
| ७७ | १० | त्रिका | त्रिक | १४२ | २४ | मुहु | र्मुहु |
| ७७ | १४ | द्रष्टव्यमिति | द्रष्टव्य इति | १४४ | १८ | राद्रक | रार्द्रक |
| ७८ | ३ | प्रयोजकत्वे | प्रयोजकत्वे सति | १४७ | १६ | लक्षणम् | लक्षक: |
| ७८ | १६ | पर्याय | पर्याये | १४७ | २० | लक्षणं | लक्षकं |
| ८३ | ९ | समवाधा | समवधा | १४९ | ६ | गुणपेक्ष | गुणापेक्ष |
| ८६ | १ | चक्षुर्ज्ञानादीनि | चक्षुर्दर्शनादीनि | १५० | २४ | विशुद्धय | विशुद्ध्य |
| ८९ | २३ | निवृत्तिः | निर्वृत्तिः | १५३ | २ | नोत्किर्यते | नोत्कीर्यते |
| ९४ | ४ | चत्वारो | चत्वारस्सम | १५३ | २ | उत्कीरणं | उत्किरणं |
| ९८ | ११ | लाषेव | लाष इव | १५८ | २१ | निस्पन्दो | नि:स्पन्दो |

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६५ | १६ | मुहूर्त्तिकाः | मौहूर्त्तिकाः |
| १६५ | १९ | शेषायुः | शेषायूः |
| १६५ | २० | मन्थना | मन्थाना |
| १६७ | २ | समयाश्चान्थ | समयाश्च |
| १६७ | ९ | भूतास्समि-त्यादयः | भूतान् समि-त्यादीन् |
| १६९ | ९ | स्यापत्र | स्याप्यत्र |
| १७२ | ५ | सन्तप्तोऽपि | सन्तापेऽपि |
| १७२ | २८ | न्यज्ज्वा | न्यज्वा |
| १७४ | ४ | सदुष्टाना | दुष्टाना |
| १७५ | १२ | कूलोपर्ग | कूलोपसर्ग |
| १७६ | ९ | विभावयता | विभावयतः |
| १७६ | २० | ताऽऽद्रियेत | तामाद्रियेत |
| १८१ | ९ | व्यदेश | व्यपदेश |
| १८२ | ७ | तीर्थान्तर-संक्रामतो | तीर्थान्तरं संक्रामतो |
| १८४ | १२ | प्युशम | प्युपशम |
| १८७ | १५ | पाविति | पा इति |
| १९० | १२ | रूप | रूपे |
| १९१ | ८ | संयम | संयत |
| १९५ | ४ | त्रिंशदादि | त्रिंशादि |
| १९८ | २४ | आद्य | आद्या |
| २०२ | १ | द्वादर | द्वादर |
| २०२ | १६ | दलिकं | दलिकस्य |
| २०३ | ८ | छेदो | छेदोपस्थापनीयः छेदो |
| २१६ | २ | तीथे | तीर्थे |
| २१८ | १ | णीयम् | णीयः |
| २१८ | १ | मांसश्च | मांसश्च |
| २१८ | १ | त्याज्य एव | त्याज्यमेव |
| २२४ | ७ | त्कर्षाश्च | त्कर्षश्च |
| २२४ | २१ | कानशा | कानाशा |
| २३० | ९ | दुखं | दुःखं |
| २३१ | १ | ध्यायायति | ध्यायति |
| २३२ | २२ | विदाभिति | विदामिति |
| २३६ | ७ | सम्बन्ध | स बन्ध |
| २३६ | १९ | त्पुद्गलैः | त्पुद्गलैः |
| २३९ | ३ | इत्यर्थे | इत्यर्थः |
| २४२ | ७ | काय | काय |
| २४२ | २२ | तेदव | तदेवं |
| २४३ | १६ | व्यापारा | व्यापाराः |
| २४३ | २७ | तावेवो | तयोरेवो |
| २४५ | १ | त्यर्थः | त्यर्थः |
| २४५ | १७ | मित्येव | मित्येवं |
| २४६ | २४ | निर्वर्त्तना | निवर्त्तना |
| २४८ | २ | परिणमति | परिणमते |
| २५२ | २४ | द्विधाः | द्विधा |
| २५८ | २ | भेदास्तेषाम् | भेदास्तासाम् |
| २५८ | २३ | सामग्रीस | सामग्री |
| २५९ | ३ | वरणमा | वरणे आ |
| २६० | २४ | विशुद्धया | विशुद्धया |
| २६३ | ६ | विधोदयो | विध उदयो |
| २६५ | ४ | कारोपयुक्तस्य | कारोपयोगयुक्तस्य |
| २७१ | ६ | शद्वै | शब्दै |
| २८२ | ९ | भेदा | भेदो |
| २८२ | १५ | जीवा | जीवाः |

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् | पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २८५ | १ | पुरुषस्य क्रय- | पुरुषादेः | ४८० | २० | पर्यायार्थिकाः | पर्यायार्थिकनयाः |
| | | भिलाषो | क्रयाद्यभिलाषो | ४८५ | ५ | प्रायतोऽनेकधा | प्रायतो |
| २८६ | २२ | ह्यावरकं | ह्यावारकं | ४८५ | ११ | वक्कभिप्रायेण | वक्रभिप्रायेण |
| २८८ | १० | ज्ञेयताया | ज्ञेयतायाः | ४८९ | १४ | कल्पतात् | कल्पनात् |
| २८८ | १९ | दुष्यन्ति | दुःष्यन्ति | ४९१ | ७ | कुम्भः | कुम्भं |
| २९३ | २ | मार्गणाः | मार्गणा | ४९४ | २१ | वासो | वासौ |
| ३०२ | १० | जीना | जिना | ४९५ | १३ | नामापि | नामपि |
| ३१० | २१ | यन्नैवं तन्नैवं | यदेवं तदेवं | ४९७ | २० | भूमिकत्वा- | भूमिकत्वा- |
| ३१६ | ११ | पकर्ष | प्रकर्ष | | | सङ्ग्रहा | त्सङ्ग्रहा |
| ३२६ | १९ | शमादिति | शमेति | ५०० | १ | शब्दानयभास | शब्दनयाभास |
| ३२६ | २१ | शमादित्यर्थः | शमेत्यर्थः | ५०३ | ६ | वर्त्तमानपि | वर्त्तमानमपि |
| ३३० | ८ | सत्त्वस्या | सत्त्वस्य | ५०३ | ९ | त्ततत्त्ना | त्तत्त्ना |
| ३३३ | १९ | व्यभिचारात् | व्याप्त्यसिद्धेः | ५३४ | १० | ह्याधिकान्नृपति | ह्याधिकान्नृपति |
| ३३६ | १७ | भाषमाणो | भाष्यमाणो | ५३६ | २६ | रुत्तव | रुत्तय |
| ३४९ | २० | चेष्टान | चेष्टानां | ५४४ | १३ | शैक्षकश्चाह | शैक्षकश्चाह |
| ३५३ | १५ | स्सनो | स्सतो | ५४८ | १७ | तक्रीडा | तत्क्रीडा |
| ३५६ | २४ | दृष्टान्तान्याह | दृष्टान्तानाह | ५५८ | २० | सम्बधेन | सम्बन्धेन |
| ३६२ | १० | कतया | कया | ५६० | १० | प्रवाहो | प्रवाहः |
| ३६७ | २१ | कृतिको | कृत्तिको | ५६१ | १९ | हेतया | हैतया |
| ३६९ | १ | वह्नयादिधर्म | वह्नयादिर्धर्म | ५६२ | ६ | तेनः | तेन |
| ३७६ | ९ | अत्र | तत्र | ५६५ | १३ | दक एवो | दकमेवो |
| ३८१ | १६ | नुलब्धि | नुपलब्धि | ५६५ | १४ | मिते | मितो |
| ३९१ | १७ | नादौ | नान्ते | ५७४ | २६ | एवभूताः | एवम्भूताः |
| ३९२ | २६ | गुणशब्दः | गुणश्शब्दः | ५७७ | ३ | दरभ्य | दारभ्य |
| ४०४ | २६ | अन्वयव्यति | अव्यति | ५७७ | ५ | क्रोंच | क्रौंच |
| ४३० | ३ | वोत्पत्ति | वोत्पत्ते | ५७९ | १ | नव | नवा |
| ४७६ | ३ | प्युचार | प्युपचार | ५७९ | १ | न्यादिति | न्यायादिति |
| ४८० | २० | द्रव्यार्थिकाः | द्रव्यार्थिकनयाः | ५७९ | ३ | नक्षत्रेण | नक्षत्रेण चन्द्राः |

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८२ | १ | नान्तरं | नानन्तरं |
| ५८३ | ३ | रज्जु | रज्जू |
| ५८८ | ९ | वैति | वेति |
| ५८९ | १० | हीन्दि | हीन्द्रि |
| ५८९ | २१ | विधेयम् | विधेया |
| ५९० | ५ | उद्धटा | उद्धाट |
| ५९० | ८ | अरुणा | अरुणोदया |
| ५९० | १० | व्यते | व्यन्ते |
| ५९० | १४ | खना | खनायाः |
| ५९२ | ८ | उत्क्षि | विशिष्टभावाश्च उत्क्षि |
| ५९२ | १७ | त्राणां | त्रिणां |
| ५९२ | १७ | त्रिगस्तात्रि | त्रिणो नि |
| ५९३ | ३ | त्वागमा | दागमा |
| ५९३ | ७ | मता | मत्ता |
| ५९३ | १५ | कादीनां | कानां |
| ५९५ | ३ | वर्त्तना | वर्त्तन |
| ५९५ | १५ | वकुश | बकुशोऽ |
| ५९७ | ४ | अविनय | विनय |
| ५९९ | ७ | सन्नन्तर | सन्नान्तर |
| ५९९ | १९ | पाप्ते | प्राप्ते |
| ६०० | १४ | कम | क्रम |
| ६०० | १८ | निरोधशै | निरोधश्शै |

## हमारे आर्थिक साहाय्यकों की सूची।

### देनेवाले सज्जनों के शुभ नाम

### फलौदी ( मारवाड )

| रुपये | नाम |
|---|---|
| ३२७) | तपागच्छ श्री संघ<br>( वि. सं. १९९७ के चातुर्मास में हुई ज्ञान की आमदनी से ) |
| ३००) | श्रीमान् शेठ जमनालालजी संपतलालजी छाजेड. |
| १२१) | श्रीमान् शेठ माणेकचन्दजी अमरचन्दजी कोचर. |
| ७५) | श्रीमान् शेठ लालचन्दजी मीलापचन्दजी ढड्ढा. |
| ७५) | श्रीमान् शेठ कीसनलालजी संपतलालजी लूणावत. |
| ७५) | श्रीमान् शेठ भभूतमलजी कानुगा. |
| ४५) | श्रीमान् शेठ पद्मचन्दजी संपतलालजी कोचर. |
| ४५) | श्रीमान् शेठ कंवरलालजी कानुगा. |
| ४५) | श्रीमान् शेठ पुनमचन्दजी उदयराजजी कानुगा. |
| ३०) | श्रीमान् शेठ लखमीचलजी मीश्रीलालजी वैद. |
| ३०) | श्रीमान् शेठ नेमीचन्दजी वैद. |
| ३०) | श्रीमान् शेठ संपतलालजी गुलाबचन्दजी कोचर. |
| २१) | श्रीमान् शेठ लक्ष्मीलालजी मीश्रीलालजी कोचर. |
| २१) | श्रीमान् शेठ नवनीधमलजी कोचर. |
| २१) | श्रीमान् शेठ संपतलालजी वैद. |
| १५) | श्रीमान् शेठ मगनमलजी कानमलजी कोचर. |

१५) श्रीमान् शेठ अगरचन्दजी लुंकड.

१५) श्रीमान् शेठ अमरचन्दजी वैद.

१५) श्रीमान् शेठ जेठमलजी कानुगा.

१५) श्रीमान् शेठ जुगराजजी नाहर.

१५) श्रीमान् शेठ सुगनचंदजी कोचर.

---

## बीकानेर ( राजपूताना )

३८५) जैन श्वेताम्बर श्री संघ, ह. श्रीमान् मोतीलालजी बैद.
( वि. सं. १९९८ के चातुर्मास में हुई ज्ञान की आमदनी से )

२००) श्रीमान् बाबु नथमलजी संपतलालजी रामपुरीया.

१००) श्रीमान् बाबु भंवरलालजी रामपुरीया.

३०) सतीबाई का उपाश्रय ( ज्ञान की आमदनी से )

३०) श्रीमान् अभयराजजी नाहटा.

---

## बगडी ( मारवाड )

६७) जैन श्वेताम्बर श्री संघ.

---

## साणंद ( गुजरात )

७५) विजयआणसुर नानागच्छ, ह. माणेकचन्द केशवजी

---

## ईडर ( महीकांठा )

७५) जैन श्वेताम्बर श्री संघ ह. शेठ आणंदजी मंगलजी की पेढी.

---

## जूना डीसा ( गुजरात )

३०) जैन धर्मशाला का संघ, ह. न्यालचंद गोडीदास.

## श्री लब्धिसूरीश्वरजैनग्रन्थमालाप्रकाशितग्रन्थसूची ।

| | | |
|---|---|---|
| १ | जैनव्रतविधिसंग्रहः ... ... | ०-८-० |
| २ | हीरप्रश्नोत्तराणि ... ... ... | ०-१२-० |
| ३ | श्रीपालचरितम् ... ... ... | ........ |
| ४ | तत्त्वन्यायविभाकरः ( मूलम् ) ... | ०-८-० |
| ५ | पंचसूत्रम् सटीकम् ... ... | ........ |
| ६ | हरिश्चन्द्रकथानकम् ... ... | ........ |
| ७ | वैराग्यरसमंजरी ... ... | ........ |
| ८ | चैत्यवन्दनचतुर्विंशतिः ... ... | ०-२-० |
| ९ | कविकुलकिरीट ... ... | ०-८-० |
| १० | मूर्तिमंडन ( गुजराती ) ... ... | ०-४-० |
| ११ | मूर्तिमंडन ( हिन्दी ) ... ... | ........ |
| १२ | आरंभसिद्धिः सटीका ... ... | २-०-० |
| १३ | तत्त्वन्यायविभाकरः ( स्वोपज्ञवृत्तियुतः ) | ५-०-० |
| १४ | सद्भावनाप्रकाश ( हिन्दी ) .... | ........ |